# …काया अतीतावलोकनम्


रचयिता

अखिलभारतीयहिन्दीसाहित्य-सम्मेलनेन 'साहित्यमहोपाध्याय' इति उपाधिना अथच अखिलभारतीयहिन्दीसेवीसंस्थानेन 'साहित्यमहारथी' इत्युपाधिना समादृतः एवम् देव-पुरस्कार-आचार्यरामचन्द्रशुक्ल-नामितपुरस्कार-प्रभृति-नानापारितोषिकैः सम्मानितः तथा "वैदेह्या अतीतावलोकनम्" इत्याख्यकाव्यस्य उ०प्र० संस्कृत—अकादम्या पुरस्कृतस्य प्रणेता

## डॉ० रमाशङ्करतिवारी


दिसम्बर, १९९३ ई०

# समर्पितम्
# स्वर्गीयायै जीवनसहचर्यै

—: o :—



"पश्येयमेकस्म कवेः चेत्
सारस्वतं कोषमवैमि रिक्तम् ।
अन्तः प्रविश्यायमवेक्षितश्चेत्
कोशे प्रविष्टा कविकोटिरेषा ।।"
—शिवलीलार्णवः (१/१८)

—: o :—

प्रकाशक : मंजुल प्रकाशन
२०, लक्ष्मणपुरी, फैजाबाद (उ०प्र०)

# प्राक्कथनम्

काव्ये प्रस्तुते विरचिते सर्वथैव नूतनविधायाम्, अविज्ञातायाम् गीर्वाणवाणीकाव्यपरम्परायाम्, श्रीकृष्णविश्लिष्टा राधा संस्मरति स्वाम् अतीतं मधुरं व्यतीतं तस्य क्रीडनशीले साहचर्ये आबाल्यात् । प्रणयिनी एका तस्याः कल्प्यते यस्यै राधा वर्णयति अतीतं स्वभुक्तं, समवलम्ब्य विभिन्नलीलाः निरूपिताः न केवलं श्रीमद्भागवते प्रत्युत समग्रकृष्णकाव्ये उपलभ्यमाने मध्यकालीनसाहित्ये विभिन्नभारतीयभाषाणाम् अपि ।

राधा विद्यते जीविता महाभारतयुद्धपर्यवसानं यावत् एवञ्च अवसीदति परिध्याय श्रीकृष्णस्य महत्त्वगर्भां भूमिकां तस्मिन् विध्वंसकारिमहासमरे–इत्यपि वर्ण्यतेऽत्रकाव्ये ।

निरूपणशैली रुचिरा, सौरस्यसमन्विता, वैदर्भीरीतिसमाश्रिता च । अपिच संगेयात्मकता अभिरक्ष्यते आद्योपान्तम् अथच छन्दोवैविध्यं अलङ्करोति रचनां समग्रां सहृदयानां मोदाय । भाषा वर्तते प्रसादगुणोपेता तथा च समावेशयति कतिपयदेशजशब्दान् एवम् पदानि गृहीतानि कृष्णलग्नहिन्दीकव्यात् ।

मुद्रणप्रमादाः दृश्यन्ते यत्रतत्र मिषतां लेखकस्य सावधानतायाः प्रूफसंशोधने । क्षमणीयोऽस्मि एतत्कृते । उत्तरप्रदेश–संस्कृतअकादमी प्रददौ आर्थिकसाहाय्यं पुस्तक–प्रकाशने, तदर्थं कृतज्ञोऽस्मि तस्याः ।

विश्वसिमि रचना एषा अधिगच्छति प्रियतां स्नेहञ्च संस्कृतानुरागिणां सचेतसाम् ।—

इति समापयति विदुषामाश्रवः

**डॉ० रमाशङ्करतिवारी**

२०, लक्ष्मणपुरी कालोनी
फैजाबाद : (उ० प्र०)
२५.१२.१९९३ ई०

# राधिकाया अतीतावलोकनम्

## [ क ]

रागश्छलति खलु मुरलिका ठगति च ।
न जज्ञौ तदानीं, त्वबोधा बभूव ।।
कथं गमयेयं तु कालमिदानीम् ।
नाना 'नन्दलालं', न जाने, सजनि हे !

X X X

मेघमेदुरनभो गर्जितं स्मर्यते,
कृष्णिमा शतह्रदा वायुर्वेगस्तथा ।
धावनं शृङ्गिणीनां वा रम्भितम्,
भूरुहाणां क्षोभश्च भयकम्पनम् ।




तत्रैवागम्यते तेन यदृच्छया,
हसता विलसता मधुरभाषिणा ।
लालयति मा च गभीरं सस्नेहम्,
मा भैषीः, राधे, भणति च सविनयम् ।
गमयामि त्वां ते सुगेहं च शीघ्रम्,
त्वज्जननीसकाशं ह्यटव्याः पारम् ।।

तदाऽऽगम्यते भीषितेनेव पित्रा,
प्रीतः किल नन्दलालं तु दृष्ट्वा ।
निर्दिशति तं प्रापयितुं च सद्म,
मा सत्वरं मेघपतनात्पूर्वम् ।।

जननी हर्षिता साधुवादं ददाति,
पुलकायमाना नु गद्गदस्वरेण,
कुटिलरसिकमणये हि भावाभिभूता ।।
आमन्त्रयति, वत्स, ह्यागच्छ नित्यम्,
गेहं त्वदीयं च द्वारं त्वदीयम् ।
मन्यस्व मा तु जननीं विस्रब्धम्,
राधा मुग्धाऽबोधा च भीरुः,
एकाकिनी गन्तुकामा न ह्यटवीम् ।।

आगच्छति स ललितो गोष्ठं प्रगे हि,
दोग्धि ह सहर्षं धेनुश्च नित्यम् ।
विहसति 'किलकिलति' किल संदृश्य वक्त्रम्,
क्षिपति क्षीरधाराश्च वक्त्रे ममैव ।।
प्रोत्साहयति तं जननी खलु सुप्रीता,
क्रीडायां त्वस्यां तस्याः प्रमोदे,
समयतः नेत्रे स्म, पिदधामि बहुशः ।।
हसत उभौ मत्प्रबाधन्तु दृष्ट्वा ।
आपत्तिवादं करोमि बहुशस्तु व्यर्थम् ।।
कुप्यामि जनये, वदामि च, गन्तास्मि ।
ह्यटवों न पुनरपि गवां चारणाय ।।
प्रहर्षयसि किं दुर्विनीतं च बालम् ।
नन्दसूनु, न जानासि तत्कृत्स्नशीलम् ।।
प्रतिपादयेन्मामेषं तु विपिने स्म,
दुष्टस्तु एकाकिनीं खल्वविघ्नम् ।
भीषयति मां बहुशो, न वेत्सि,
जननि, त्वस्य वृत्तं च तथ्यम् ।।

उपविशामि यदा तरुतलेषु विस्रब्धम्,
पश्यन्ती ह सुरभीश्चरन्तीः सुसुखम् ।
तदैवाव्रजति कोकरूपं गृहीत्वा स्म,
अकस्मादापतति शृङ्गिणीनां च मध्ये ।
भीषिताः सङ्कुलं ता द्रवन्ति च सद्यः,
वै इतस्ततः चोद्विनज्मि तु बहुशः ।
जननि, मा प्रहर्षय तमैतुं च गेहम्,
स कुटिलो विदग्धः सव्याजस्तु मार्यो,
भ्रामयति प्रत्यायिनो मधुगिरया तथैव ।
मा विश्वसिहि तं, न गन्तास्मि सार्धम्
तेन पुनरपि च वृन्दां गवां चारणाय ।।
परमवगण्यते प्रतिवादः सदैव,
न चिन्तयति सा तु कस्यां विपत्तौ,
तस्या "लाडिली" पातयते तथा च ।।
रागश्छलति खलु मुरलिका ठगति च,

न तुलये स्म तदानीं त्वबोधा बभूव ।
कथ गमयेयं तु कालमिदानीम्,
नाना 'नन्दलालं', न जाने, सजनि हे !

[ ख ]

"पनघटं" स्मरामि जलानयनश्लिष्टम्;
सखीनां च यूथं तुलितकुण्डशीर्षम्;
लम्बितवेणुपृष्ठं विनोदे हि मग्नम्;
तरणिजायाः पुलिने प्रदोषेतु नित्यम्;
रविरश्मिजालं सुग्रथितं जलेषु;
नर्तितवृति स्निग्धे समीरे त्वजस्रम्;
तटपादपस्य विरलमन्द्रस्वनितम्;
परिहासं विनोदं सखीनां च ललितम्;
पातनं किल शर्कराणां वै दुष्टबुद्ध्या;
पूरितजलकुण्डिकासु च नटनागरेण;
सुसुखमध्यास्य विटपं नयनं विजित्य ॥



प्रतिगच्छन्ति वसतिं यदा तु युवत्यः
पन्थानं नियतं स विहसन् रुणद्धि;
चिरयति गमनमुपाश्रित्य जालम्;
नृत्यति प्रक्रीडति रमते सुललितम्;
प्रकर्षति दुकूलं निवीतं सहासम्;
प्रतिबाधते तरुणियूथ सव्यङ्ग्यम् ॥
हास्येन वदति मा च विवशाऽधम्;
त्वाक्षेपं सहे स्म समौनं सलज्जम् ।
मा स्मारयति नमःकालं च पूर्वम्,
यदाऽऽलिङ्गिताऽहं तु तेन वनान्ते ।
उपालभ्ये ह्रिणीये सखीनां च मध्ये,
न प्रभवामि वक्तुं तु कुपथे निरुद्धा ।
गेहं प्रपन्ना पृच्छ्यते किल च जन्या,
किं कारणं क्वच विलम्बो ह्यभूत् ।
राधे, ते वयस्या निवृत्ता पूर्वम्,
नार्हसि समाचरितुमित्थ त्वयोग्यम् ।

परं किं प्रतिवदेयं न जाने तदा तु,
स्मर्यंते सङ्कटं, स्मर्यते जिह्वशोषः ।
जननी व्याहरति कन्यकानां शीलम्,
प्रचीयमानतरुणीनां बाधं च न्यायम् ।

न प्रभवामि स्मतुं कीदृशी विक्रिया मे,
मनसि जायते पनघट—मेलकेषु ॥

X X X

रागश्छलति खलु मुरलिका ठगति च,
न जज्ञौ तदानीं त्ववोधा बभूव,
गमयेयं कथं दुःखकालमिदानीम्,
नाना 'नन्दलालं' न जाने, सजनि हे !

X X X

आस्त समैतुं सकाशं च चतुरस्तु,
ह्यनुदिनं मातुः मायी सव्याजम् ।
आह्वयति मा तदा सा तदीये समक्षे,
श्मीलति मयि स हासश्लिष्टः तथैव,
प्रणमितानना मोहिता ह्युपविशामि ।
प्रहर्षयति मां चोन्नयितुं च शीर्षम्,
भणति चेयं लपनविमुखो च भीरुः ।
प्ररोचयति मां चोपकर्तुं तमेव,
मेलितुं खेलितुं तेन सार्धमविघ्नम् ।

न जज्ञौ तदा, पातयति सा विपत्तौ,
तस्या "लाडिलीं", वै छलिना विमुह्य ॥

[ ग ]

न ह्यवसादयति रन्धयति मां मान्नम्,
अपि कन्यकाः तरुणीः तूढा अनूढाः,
मधुरं वादयन् मायिमुरलीं विदग्धः,

रतिनागरो वादकुटिलो हि चतुरः,
तरुणीनां चैलमपहरत् स्नायिनीनाम्,
एकदा हिमपीडितानां यमुनाजलेषु ।
कदम्बं ह्यारुह्य विहसति खलु लीलया तु
परिलोलति चीरग्रामं सुरवतं समुपेक्षमाणः,
पर्यभ्यर्थनं कातरं किल सविनयम् ।।
प्रवर्तयामास तरुणीः प्रत्यभ्युपैतुम,
स्वं शासनं हित्वा शिष्टशीलम् ।
स्मर्यतेऽस्मदीया स्थितिः मानसी वं,
नोच्छ्रयितुं शिरः किल शशाक तदानीम् ।।

अथ प्रत्याजग्मुः युवत्यः स्वगेहम्,
तच्च्छायां ततो नातिक्रमितुं शपन्त्यः ।
अहमप्यागता पृच्छ्यते स्म च मात्रा,
वहुकालं कुत्र चिरायसि ह मार्गे ?
परन्तु न जाने कथं प्रतिवदेयम्,
अथ कथं कृष्णकरणं कथेयम् ?
मौनं गृहीत्वा समायं तु गर्भम्,
धरन्ती चीरवृत्तं ध्याने सलज्जम् ।
ननु निर्णयामास गन्तुं तरणिजाम्,
न पुनरपि मज्जनाय न तटदर्शनाय ।।

स्मृतयः चीरहरणस्य चिरयन्ति ध्याने,
अद्यावधि यदा विप्रलब्धा भवामि ।
धूर्तराजो मिमेल काले च काले,
व्रज– "डगरीषु" वञ्चकमणिः 'नन्दलालः' ।
चिक्षेप जालं स्वरूपस्य सघनम्,
मे संवेदने कैतवेन विदग्धम् ।
शोभा– "ठगौरी" त्वशिथिलायमाना,
जहार न शयनं नयनयोः प्रसह्य,
ववृते जागरा त्वहोरात्र तथैव ।।

सौन्दर्यसिन्धुं प्रतरतो न पारम्
नयनेऽस्मदीये "थकितै" तु यतने ।

बुद्धिः विवेकश्च नैति सफलताम्
गणयितुं प्रमाणं च तस्य यथार्थम ।
नटवर्यस्य श्यामलशरीरं जलौधः;
कटिवसन सुपीतं तरङ्गायते खलु;
दृष्टि क्षिपति यदा पुरतश्च पश्चात्;
उत्पतन्ति भ्रमरकाः त्वङ्गेषु छव्याः;
प्रस्फुरति नेत्रयुगलं, नटति वै सुमत्स्यः;
मकराकृतकुण्डलं भूषयति कर्णयुगलम्;
अनुचरति भुजद्वयं पन्नगं शोभमानम्;
विलसति मुक्तावली सुष्ठु हृदये, सजनि हे !
इव सुरसरी मिलतः चैकदेशे, सजनि हे !!

"थकिता" किल वयस्या सन्दर्शने रूपराशे;
आत्मानं जहौ छविजलधौ प्रसह्य ।
स्मृतिपथमवतरति वै रूपेन्द्रजालम्,
किल तालाङ्कवन्धोश्च नटनागरस्य ।
अहो ! चित्रपिच्छकपुच्छमौलिः सुरम्यः,
राराजते तस्य वृन्दारभाले स्म;
तरलायमानः कुञ्चितकाकपक्षः,
सव्रीडयति त्वलिकुलं कृष्णद्रव्या;
वक्रतया विजयते सुभृकुटी तु चापम्;
क्वणति नूपुरं मन्दमन्दं च मधुरम्;
अलिकस्थतिलकं विशिखः सुतीव्रः,
सूर्येण सन्धायत इव शरलग्नचापम्,
अपसारयितुं तिमिरयूथं जनरञ्जनाय,
कन्दलयो विभातश्च वर्तुलसुरम्ये,
मणिजटितकुण्डले कर्णलग्ने तथैव;
इव तरणिजाजलेषु तरणिबिम्बयुगलम्;
वेपमानं सुललितं प्रबलवायुवेगे;
स्मयमानो लपति मधुगिरया विदग्धः,
परिपक्वबिम्बाच्च स्रवतीव रागः;
दीव्यति दशनावली रदच्छदयोर्मध्ये,
दीर्यंत इव करकवत्सं समताभिलाषे;

शोभते त्रिवली तस्य च किल शिरोधौ;
सौन्दर्यसीमा रच्यते बहु पुष्पेषुणेव;
मुक्तावली विलसति हृदयेऽथ प्रशस्ते,
इव सुरसयंवतरति धारयोः नीलशैलात्;
कनकाभप्रावरक शोभते श्यामगात्रे,
आगच्छतो रात्रिदिवसौ खलु एककाले;
गहनमणिपूरः पल्वलं तु सुधायाः,
सुरचिता त्रिवलिनि श्रयणोव यत्र;
पादाभ्यां चलति मत्तद्विरदो ह श्यामः,
तच्च्छविर्दीरयति मे वक्षस्त्विदानीम् ।

सख्यो वदन्ति, पश्य छव्यास्तु सिन्धुम्,
पतन्त्युत्पतन्ति चोर्म्मयोः यत्र कान्त्याः ।
किं कारणं तिष्ठसि शून्यहृदया तु, राधे !
विलसति यदा नयनोत्सवस्ते च पुरतः ?
विलोकय तु रमणीयताऋद्धिव्यूहम्,
सफलय जन्मात्मनो मन्दच्छायलोके ।

X X X

किं चिन्तामि लीलां लीलेश्वरस्य,
चरितां च तेन मया पूर्वकाले ।
स्मृतयस्तु हृदये कुर्वन्ति रन्ध्रम्,
विस्मरणं च तासां विषमं, सजनि हे !
एकदैकाकिनी खल्वध्यासि गेहम्,
पश्यन्त्याननं रजतमुकुरे सलीलम्,
वितूस्तयन्ती केशकवरीं विस्रब्धम् ।
उपागमत्स च सहसा तदैव,
समवृणुत तु नेत्रे तलयोश्च गाढम्,
पृष्ठतो न तूक्त्वा किमपि, स्मरामि ।
शिथिलयितुं यतेस्म बहुशस्तु बन्धम्.
अतिहासं चकार च मदनाभचौरः ।

गृह्णीते स्म मा तु प्रगाढ च भुजयोः,
चिरं, न शक्नोमि वक्तुं हि ज्वारम्,
खलु भावस्य वेपथुमती वै तदानीम् ॥

अथ स्नेहाङ्कुर उद्भिन्नस्तु हृदये,
न विभावयामास प्रमिति तदानीम् ।
प्रविवेश मनोज्ञं रूपं तु चेतसि,
व्यथेस्म निगूढं तदवलोकनाय ।
आविश्चकर निष्क्रमितुं गृहाश्च,
व्याजं जननीं विश्वास्य निपुणम्;
मेलितुं श्यामसुभगं छलेन च निभृतम् ।
कालात्यये त्वङ्कुरोऽभूत् विटपः,
प्रविविशुः च मूलानि पाताललोके ।
हन्त, विनिगूहितु रागरूपं ह्यसिध्यत्,
विषमं सूक्ष्मदर्शाच्च लोकस्य नूनम् ।
अपवादो विसर्पति च घोषे ह समग्रे,
राधानन्दसूनुः चरतः त्वयोग्यम्
कुञ्जेषु, "डगरीषु" प्रकटं, परोक्षम्,
मिलतो, लपतो, विलसतः चिराय ।
उद्दिश्य मां च विहसन्ति सख्य,
राधा "नवेली" चतुरा, विदग्धा स्म
विधिरपि न वेत्ति तस्यास्तु खेलाम् ।
यद्यपि ह्यल्पवयसी, तदपि तु गभीरा,
विषमुदग्रहीतुं गुह्यं च तस्याः ।
वादयति स मुरलीं तु प्रत्यूषकाले,
तामाकारयति सच्छलं छद्मनाम्ना ।
व्रजत उभौ वृक्षजालं च सघनम्,
निभृतं, विजित्य च लोकस्य नयनम्,
अथ क्रीडितः प्रकामं संव्रीड्य मदनम् ।

जननी चिन्तिता बोधयति मां बहुशः,
"लाडिली" त्वमत्येषि चरितं च विहितम् ।
नार्हसि विचरितुं व्रीडां तु त्यक्त्वा,

नन्दतनयेन साधं रहसि वा प्रकाशम् ।
अभ्यसूयककथा प्रसरति सर्वघोषम्,
त्वधिकृत्य युवयोः साहृयं ह्ययुक्तम् ।
अवधेहि, गच्छसि युवत्वं तु क्रमशः,
स्वैरवृत्तिस्तु निगृह्णीया ह्यवश्यम् ।
कलङ्कयति स्वच्छन्दचरणं त्वदीयम,
सत्कुलमस्मदीयं लोकस्य दृष्टौ ।
परिवादः क्लिश्नान्ति पितरं च बहुशः,
भृशदुःखितः सस्तु कुलकीर्तिहेतोः ।

प्रहर्षयामास शौरिं च ह्यादौ;
अवमेने ह विरोधं मदीयम्;
तर्जयति रागविवशां तरुणीमिदानीम् ।

स्मरामि सखीनां च व्यङ्ग्यबाणान्,
उपहासवादं तु यादवकुलानाम् ।
सहेस्म तु सर्वं प्रणयस्य हेतोः,
तस्मिन् च कपटिनि, छलिनि, सजनि हे !

गमयामि कालं कथं विप्रयुक्ता,
विविक्ताऽऽत्मलीना च लोकेन त्यक्ता ।
हा, जीवितं जर्जरं त्यक्तुकामा, सजनि हे !!

X X X

रागश्छलति, वञ्चयति वंशवेणुः,
न जज्ञौ तदानीं त्वबोधा बभूव ।
कथं यापयामि तु कालमिदानीम्,
शीर्णप्राणा, विपन्ना, न जाने, सजनि हे !
नाना चोरहरकं, न जाने, सजनि हे !!

X X X

यमुनायाः पुलिने प्रपन्ना, अहो, रासलीला !
सिकतानां देशे विरचिता, अहो, नृत्यलीलां ! !

क्लिश्नन्ति प्राणान् पूर्वानुस्मरणम्,
रन्ध्रीभवति मर्मदेशः, सजनि हे !

मुरली ध्वनति मध्यरात्रे हि सहसा,
जनयति विप्लवं तरुणि चेतस्सु गाढम् ।
जहति वल्लभं स्तनन्धयसुतं वै,
गुरुजनं परिजनं गृहजनं शीघ्रकं वै,
श्रुत्वा वेणुनादं त्वपरिवर्जनीयम् ।
अस्वपं रात्रिशयने, चित्ते तु तस्मिन्,
अबुध्ये झटिति मातृक्रोडं विहाय,
यदाऽवतीर्णो ध्वनिः कर्णविवरे मदीये ।
जननि पृच्छति, त्वमथ कस्य हेतोः,
बुध्यसे मध्यरात्रे सहसाऽकस्मात् ?
पुत्रि, कथयस्व किं दुःस्वप्नम् अदर्शः,
किं बाधते झर्झरीकं त्वदीयम् ?

"मातः, ह्यदर्शं न स्वप्नमिदानीम्,
न च बाधते काऽपि पीडा शरीरम् ।
शब्दयति मां मुरली ह्यनिवारणीयम्,
खलु संक्षोभयति मदनमथनं नवीनम् ।"

X X X

बिभर्मि च वसनाभरणानि त्वरया,
अवमत्य मातुः सुमन्त्रं सुभद्रम् ।
गेहं त्यजामि सवेगम् अव्रीडम्,
सम्मेलितुं वैणविकं विदग्धम् ।

श्वासं निगृह्य च ग्राममत्यैमि,
युवतीनां यूथं च यूथं मिलामि,
प्रस्रवन्मार्गैस्तु भिन्नैश्च भिन्नैः,
जिगमिषु वेणुध्वनेरुद्गमं च ।

कतिचन धरन्ति स्वर्णकटकं तु पादे;
कतिचन धरन्ति मुक्तावलीं शिरोभागे
कतिचन बिभ्रति किङ्किणीं सूक्ष्मपाणौ,
कतिचन बिभ्रति शिञ्जिनीं श्रोतृमूले ।
धावन्त्यः पतन्त्यः तरुणयो व्रजन्ति,
समुत्फुल्लवदनाः श्वसन्त्यः सवेगम् ।

रञ्जयन्ति नैकाः त्वधरं रक्तकेन;
रञ्जयन्ति नैकाः नयनमलक्तकेन;
चित्रयन्ति नैकाः भुजमूल कज्जलेन;
चित्रयन्ति नैकाः हस्तमूलं चूर्णकेन;
लिम्पन्ति नैकाः पाणी पिष्टकेन;
लिम्पन्ति नैकाः पादौ सौरभेण ।

अपरा धारयन्ति वलयं कर्णमूले;
अपरा धारयन्ति मुक्तावलिं हस्तमूले;

बिभ्रति च अन्याः किङ्किणीं पादमूले;
बिभ्रति च अन्याः नूपुरं शिरोमूले;
योजयन्ति ललाटिकां वेणिवन्धे;
योजयन्ति वा केयूरकं रत्नबन्धे ।

न विस्मर्यते तद्रजनी, सजनि हे !
न विस्मर्यते वेणुनादः, सजनि हे !!

उपव्रजन्ति रवितनयाप्रदेशं तरुण्यः,
रजतकर्पराश च पिच्छलसुरभ्यम्,
चन्दकधवलितं रोचमानमतीव,
किल मदननोदिता नटवरदर्शनाय ।

किन्तु, न संदृश्यते खलु तालाङ्कबन्धुः,
अथोद्विजन्ते युवतयो ह्यवसीदयन्त्यः,
अन्योन्यं पृच्छन्ति क्व च वै चित्तचोरः ?
किं कारणं विरमते तु मुरलीविलासः,

अथवाऽऽचर्यते केनचित् कैतवप्रयोगः ?
जानीमो वयं प्रणयसुखमस्मदीयम्,
निन्द्यते बहुभिश्च खलु नीतिसेव्यैः,
अभिलष्यते अमरललनाजनेन च नित्यम् ।

कच्चित्स एवाचरति व्यपदेशं तु व्यथकम् ?
कच्चित्स एव ठगति युवतियूथं च मुग्धम् ?

सखि, तस्यामन्त्रणे समायाता निशीथे,
हित्वा युवतिशीलं च लोकं विजित्य ।

आह्वयति मां नाम्ना तु मुरलीस्वरेण ।
सखि, सत्यं ह्याकारयति स मामपि तु नाम्ना;
सखि, सत्यं संबोधयति स मामपि तु नाम्ना;
सखि, सत्यं ह्याशब्दयति स मामपि तु नाम्ना;
सखि, सत्यं ह्यामन्त्रयति स मामपि तु नाम्ना;
सखि, सत्यं विलोभयति स मामपि तु नाम्ना;
सखि, सत्यं ह्याज्ञापयति स मामपि तु नाम्ना;
सखि, सत्यं निवेदयति स मामपि तु नाम्ना;
सखि, सत्य सम्भीषयति स मामपि तु नाम्ना;

आव्रजामो निशीथे तु सैकतप्रदेशम्,
शर्कराशल्यकण्टकसमूहं च मृष्ट्वा ।
सखि, विलुप्यते मायिराजस्तु कुत्र ?
सखि, निलीयते वृजिनवक्रस्तु कुत्र ?
सखि, स ह्यन्तरितो भवेत् कस्य हेतोः ?
सखि, वञ्चयति तरुणीजनं कस्य हेतोः ?

दुर्विषह्यो भवति न्यक्कारस्तु, सखि हे !
दुर्विषह्यो भवति भक्तिभङ्गश्च, सखि हे !
दुर्विषह्यो भवति मदनतापश्च, सखि हे !
दुर्विषह्यो भवति चित्तघातश्च, सखि हे !

सखि, परिपृच्छ राधामत्रप्रसङ्गे,
सखि, प्रार्थयस्व च राधामत्र तु विषये ।

"राधे ! वर्तते कुत्र मुरलीधरश्च ?
राधे ! वर्तते कुत्र नटवरमणिश्च ?
राधे ! वर्तते चित्तचौरश्च कुत्र ?
राधे ! वर्तते चीरचौरश्च कुत्र ?

त्वमेव जानासि कृष्णस्य चरितम्;
त्वमेव जानासि कृत्स्नं रहस्यम्;
त्वमेव जानासि सव च गोप्यम्;
त्वमेव जानासि सर्वं च कपटम्;
त्वमेव जानासि सर्वं च भेदम्;

सखि, कथयस्व किमाचरति 'नन्दलालः',
अस्मासु चवंविधं सम्प्रसादं निहृत्य ।"

किमुत्तरेयं च ताभ्यः, न जाने, सजनि हे !
कथमुत्तरेयं च ताभ्यः न जाने, सजनि हे !!

X X X

सहसा निपतति वेणुध्वनिः कर्णविवरे,
चमत्कुरुते तरुणीसमूहं प्रसह्य ।

क्षणैर्भावयन्ति नटनागरं वादयन्तम्,
मुरलीं मधुरं कदम्बे ह पर्णच्छदेषु ।

समासादयामासुः वृत्तयः स्नसमानाश्च,
प्रणोदं नवोनं प्रणयताडितानाम् ।
प्रार्थयन्ते छलिनं तु चैकस्वरेण—

"अवतरस्व भूमिं, वदस्व च तरुणीः, कुसमये,
ह्याकारयामासिथ नः कस्य हेतोस्तु ?
बभूविथ, भो नागर, गुप्तः कस्य हेतोस्तु ?"

स्मरामि तदानीन्तनं तस्य रूपम्,

यदोपालम्भवर्षैः क्रियते युवतिभिः ।
अहो ! चित्रं ! मौनित्वं स भजतेऽमङ्ग्यम्;
उत्स्मयते, स्मयते केवल तु ह्यजस्रम्;
सुकुलितनेत्रकमलः सम्यो विनीतः ।
काले च काले स नमयति हि मौलिम्,
क्षमामिव याचते स्वीकुरुतेऽपराधम् ।

निवेदयति, "सुन्दर्यः, एष रचयामि रासम्,
यदा हिमरश्मिस्तनोति प्रभायाः छत्रम्;
अथ च लज्जयामश्च मदनं शौटीर्यशीलम् ।
शिक्षयामस्तमेव च शृङ्गारभावमभग्नम्;
प्रक्षोभयामो ह्यमरसिद्धललना - प्रयूथम्;
कारयामो विरञ्चिं विश्चितुं नवीनम्;
किल प्रतिबद्धं प्रेम्णा संसार च विश्वम्;
यत्र विलसति प्रणयपारिजातो ह्यमन्दम्,
शश्वत् केलिवनिका - मध्ये ह्यजस्रम् ।
स्थापयामश्च गौरवगर्भं सुवृत्तम्,
अविजेयप्रेम्णः देदीप्यमानं च विश्वे ।"

प्रीता हृष्टा युवतयो ह्याकर्ण्य वचनम्,
समुत्का भवन्ति च रासस्य लासं तु भोक्तुम् ।
विस्मरन्तिस्म सर्वाः क्लान्तिं ग्लानिं च शिशुरिव,
यो मोदते त्वधिगत्य मधुरं, विस्मृत्य शिष्टम् ।

स्मरामि, सजनि हे, रासस्य वृत्तम्,
स्मरामि, सजनि हे, नृत्यं नवीनम् ।

'ठुमुकि', 'ठुमुकि' नृत्यति वनमाली,
चम् चम् चञ्चति पिच्छलमौली,
नृत्यति युवतिजनः सविलासम्,
खलु खणखणायते भूषणग्रामम् ।
सौदामन्यो विदधति सुन्दरवलयम्,
मण्डलयन्ति ह वारिदखण्डम् ।

वारिदविद्युद् – युग्मं विलसति,
पुनः पुनः श्राम्यति किल विहरति।
श्मीलन्नयनर्तनं प्रचलति;
कुवलयगुच्छप्राणिवहः क्षुभ्यति;
वेल्लति कृष्णपन्नगी पृष्ठे,
युवतीनां श्लिष्यति तु कण्ठे।
व्यथते मनस्त्विदानीं स्मरणे,
समयति चेतोऽतीत – स्मरणे।

पदक्षेपतैव्र्यं च द्रुतपरिवर्तनम्;
अङ्गव्यावर्तनं निमिषोन्मीलनम्;
शिरःसञ्चालनं प्राणिप्रक्षेपणम्;
पिच्छमौलेः सत्रेगं वा वेल्लनम्;
मुरलीवादनं मधुरसंगायनम्;
विस्मर्तुं, सजनि, हर्षपरिप्लावनम्,
विषममिदानीं च मधुनर्तनम्॥

दुग्धवसना चन्द्रिका किल,
प्रक्षिपति वा रश्मिजालम्।
रजताभसिकताप्रसारश्च, खलु,
गृह्णाति तेजो नवीनम्।
शीतलमलयगन्धवाहश्च, वै,
प्रवहति चारुर्वा सलोलम्।

लघूर्म्मयो नटन्ति गर्भे,
कालिन्दजायाः सुललितम्।
कर्पूरकणकाः चरन्ति,
खे, रचयन्तः स्निग्धं वितानम्।
आननानि प्रच्छादितानि,
स्फुरन्ति च चामीकरर्कणिकाभिः॥

परिरम्भनं वै परिचुम्बनम्,
प्रघर्षणं वै सङ्घट्टनम्,

प्रघर्षणं वै परिलालनम्,
प्रतर्जनं वै ह्याराधनम्,
प्रफुल्लनं वै परिम्लायनम्,
प्रविहसनं वै ह्यवसादनम् !

न विस्मर्यते सा वा रासलीला !
न ह्यवगण्यते सा वा नैशलीला !!

खणखणं झणझणं क्वणनं शिञ्जनम्,
चित्रध्वनिसङ्गमं विस्मयोत्पादकम्,
संनदति कर्णयोः वृत्तमिव ह्यञ्जसा,
अद्यावधि मर्म व्यथयत्, सजनि, भूरिशः ।

स्मरामि यदाऽहं समुत्थाप्यते स्म,
नृत्ये तु प्राप्ते प्रवेगस्य शिखरम्,
सहसा नटवर्येण वै भुजलतयोर्मध्ये,
स खल्वास्त परिघूर्णयन्माभूर्ध्वं चिराय ।

तदा, सखि, चमत्कारः प्रघटते—

स्तम्भते यमुना प्रवहणम्;
स्तम्भते पवना निश्वसनम्;
रुणद्धि चन्द्रः प्रसरणम्;
रुणद्धि रजनी निस्वननम्;
रुन्धन्ति ताराः 'थिरकणम्';
रुन्धन्ति सिकता विगलनम्;
गृह्णाति पर्यावरणं तु क्षिप्रम्,
निष्पन्दतामननुभूतां समौनम् ।

हरिः प्रघूर्णति मामूर्ध्वं च भुजयोः,
उन्नमयन् च मौलिं पिधाय च नयने,
क्षिप्रतया सवेगं होव विक्षेपशिष्टः ।
तरुणयो नृत्यन्ति वातूलगत्या स्म;
मण्डलयन्त्यो मुरारिं विस्मृत्य चेर्ष्याम्;

जनयन्त्यश्च पवनं लज्जयन्त्यः समीरम् ।
स्फालयन्त्यश्च वसनानि श्वासं निरुध्य,
खणखणं झञ्झनं क्वणनमुपसृजन्ति,
ध्वनिसङ्गमं श्वसितबाधमपूर्वम् ।

अहो ! सम्प्रकर्षः ! गभीरश्च नृत्यस्य दिव्यः,
अहो महावेग ! अहो महाभावः ! अहो रासयागः ।
न विस्मर्यते रासलीला, सजनि हे !
न ह्यवगण्यते प्रेमलीला, सजनि हे !!

रासनृत्ये समाप्ते च सस्नुः तरुण्यः,
नटवर्येण साधं च यमुनाजलेषु,
लीलया सविलास खलु दीर्घकालम् ।
अहमपि सस्नौ सती तु प्रशिथिला,
वै परिक्षीयमाणा च नर्तनश्रमेण ।

जलविहारः समायाति स्मरणं वारं तु वारम्,
आप्याययन् त्वङ्गसंस्थां समीरे च प्रचुरम्,
उत्पातयति तूर्म्मिमालां लगन्तीम्,
युवतिवदनारविन्दैः प्रगाढं सलीलम् ।

अहो जलविहारः ! विसरण च तरणम् !
असितजलप्रवाहे युवतियूथमध्ये,
प्रभिन्ने लहरिमालिकया तु स्वच्छे,
रतिनागरेण समं क्षीरसंनिमप्रकाशे ।

सजननी प्रायशः तत्रैव तु स्नामि,
किन्तु, न हर्षो न लासः कदापि ।
नौत्सुक्यं न तैक्ष्ण्यं, न मोदो, न स्वादः,
विलक्षयति स्निग्धस्नानं यथा पूर्वकाले ।

किं सूर्यतनया परिवर्तते वा ?
रसायनं कमलस्य परिवर्तते वा ?

स्वभावस्तु तटकस्य परिवर्तते वा ?
जातिः कदम्बस्य परिवर्तते वा ?
शीलं समीरस्य परिवर्तते वा ?

हा दुर्दैव ! यमुनास्नानमिदानीम्
निष्प्रभं नीरसं कष्टदं च ममार्थे !

प्रत्यूषपूर्वं यदाऽहं निवृत्ता
गेहं, जननी व्यग्रा तु मिलिता ।
तदा पीडिता भर्त्सयति मां बहुशः—
"त्वं कलङ्कयसि मातरपितरौ, न वेत्सि,
त्वं दूषयसि कीर्तिचन्द्रं कुलस्य च, पुत्रि ।
त्वमतिचरसि कन्यकानां तु चरितम्,
त्वमर्जसि पिशुनवादं त्वसूयाम्,
घोषवल्ल्याः निर्मर्यादचरणैः त्वदीयैः ।
त्वं जनयसि विपत्तिमकल्प्यां ममैव तु, पुत्रि,
स्वच्छन्दवृत्तैः त्वदीयैः अपूर्वैः यादवकुलेषु ।
न भावयामि कथङ्कारं दर्शयेयम्,
ममाननं जनेषु दीपकिट्टाभिलिप्तम् ?

राधे ! त्वमर्हसि ह्यनुभवितुं व्यसनं मदीयम् ।
स्वजनाः क्षिपन्ति मय्येव किल दोषमखिलम्
ते स्वैरवृत्ताय, ग्लायामि सीदाम्यजस्रम् ।
ते भ्रातृभार्याः मुञ्चन्ति व्यङ्ग्यानि सततम्,
हे पुत्रि ! विरमय स्वच्छन्दचरण त्वदीयम्,
परित्रायस्व कुलगौरवं चास्मदीयम् ।"

न मातरं प्रतिवक्तुं शशाक स्म,
जग्रह शासनं वै शुश्रूषया च,
मतिपूर्वं मौनमुररीचकार ।
विभावयामास तस्याः क्लेशम्
यथार्थं, जज्ञौ प्रणयं मदीयम्
विषमं रागवेगं निरोद्धुम्,

असिध्यत् सजनि हे, तु मह्यम् ।
अध्यासांचक्रे तु भवनमविरतम्,
वा दीर्घकालं च संश्रित्य मौनम् ।
न रमयति मां शयनं च ह्यटनम्;
न हर्षयति मां विपिनोपगमनम्;
न मोदयति मां केशान्मार्ष्टुम्;
न प्रीणयति मां सलीलं तु स्नातुम्;
न नन्दयति मा विहसनं, न लपनम्;
न सुखयति मा मिलनं, न पीतिः, न ह्यशनम् ।।

रागश्छलति खलु मुरलिका ठगति च,
न जज्ञौ तदानीं त्वबोधा बभूव ।
कथं गमयेयं च कालमिदानीम्,
नाना 'नन्दलालं', न जाने, सजनि हे !

X X X

[ ङ ]

ननु का का लीला भासते मनस्पटले,
वक्तुं न शक्नोमि प्रकटमिदानीम् ।
एकदा जगाम च दधि-विक्रयार्थम,
सार्धं युवतिभिः प्रातः समोदम् ।
गायन्त्यः सुमधुरं गच्छन्ति ललनाः त्वग्रे,
न्यस्यन्त्यः कुण्डं शिरसि निश्चिन्तं च मार्गे,
दर्शयन्त्यो वेणीः लुठन्त्यः पृष्ठे सुललितम् ।
माकन्दविपिने व्रजामो यदा मध्यमार्गे,
ह्यकस्माद् वेणुध्वनिः ह्यापतति कर्णविवरे ।
अहो ! किं भविता, विस्माययन्ते युवतयः,
पादपेभ्यो यदाऽवतीर्णः गोपयूथः सवेगः,—
अगणेयशलभोपम काकतालीयवच्च—
ह्यचिरेण समुपस्थितो 'नन्दलालः' विदग्धः,
विहसन्, सञ्चालयन् शीर्षकं कूटबुद्ध्या ।

युवकाः परिवेष्टयन्ति परितस्तु युवतीः,
भीषिताः प्रार्थयन्ते विवशा अतीव—
"दद्ध्वं मार्गञ्च गमनाय त्वग्रे ।
व्यत्येति वेला दधिमाखनविक्रयस्य,
खिन्दति खलु नियतग्राहकजनश्च ।
अम्लायिष्यन्ते, मुरारे, नवनीतदण्डाहृतानि,
ताडयिष्यन्ति जनन्यो यदा तु व्रजामो गृहाणि ।
अनुजानीहि ह्यस्मान् गन्तुमग्रे च मार्गे,
दयस्व तरुणीजनस्य, माधव, हे रसिक !

त्वं प्रतिबाधते तरुणीः कस्य हेतोः,
अभिलषसे किं तु ग्रहीतुं च तासाम् ?
तव जननी व्रजस्वामिनी किल दधाति,
वै दधिदुग्धनवनीतसमृद्धराशिम् ।
गोमतल्लिकाः पीतदुग्धाः खलु द्रोणक्षीराः,
पीनोध्नयो नवसूतिकाश्च कृष्णाः धवलाः,
सन्ति शतशः प्रसिद्धा, व्रजगोपपरिषस्तु ।
तदपि गृध्यसि कथं, 'कान्ह', गोरसमस्मदीयम्,
नार्हसि रोद्धुं तरुणीजनं मार्गमध्ये त्विदानीम् ।
त्वमतिचरसि सच्छीलं तु यादवकुलानाम्,
मार्गावरोधो न युक्तस्त्वया तु घनच्छायकुञ्जेषु ।

किन्तु, न शिथिलीभवति नटप्रवरः कदापि,
व्यामोहयति तरुणीजनं स्वैवचनैः कूटैः ।
भणति सविनोदं, सुन्दर्यस्तु यूयम्,
विक्रीणथ गोरसं ह्यभयं दीर्घकालम् ।
अपि नो जानीथ यद्राजशुल्कं प्रदेयम् ?

उपक्रमन्ते युवतयः प्रदातुं दधिनवनीतराशिम्,
शुल्करूपेण, मुरारिर्न गृह्णाति, हन्त ।
प्रयाचते गोरसमभिनवं खलु राजस्व-रूपे,
मुह्यन्ते युवतयः, किं प्रकामयते तु श्यामः ?
वदन्ति, प्रयच्छामो नवनीतं सुमधुरं च तुभ्यम्,

क्रिमन्यत् वाञ्छसि नाम विमोहय न तरुणीः ।

अथ प्रतिवक्ति गम्भीरभावश्चोत्सेकपूर्वम्–

"राजपुरुषोऽस्मि मदनाधिदेवस्य,
चक्रवर्तिनो राजराजस्य शास्तुः,
वनमिदं मदननृपतेस्तु क्षेत्रम्,
लोकविधयः त्रुट्यन्ति सहसैव यत्र ।
उपगूह्य गोरसं दिव्यं माधुर्यभरितम्,
पालितं किल प्रच्छदपटान्ते सुललितम् ।
कामयमानो नृपः तं राजस्वरूपे स्म,
नार्हथ यूयं च त्यक्तुमिममाम्रकुञ्जम्,
यावन्न दत्थ मधुसिक्थं राजशुल्कम् ।"

लज्जन्ते युवत्यः त्वाकर्ण्य वचनम्,
पश्यन्ति खलु नतमुख्यश्च तिर्यक्
अन्योन्यं, विज्ञाय ध्वन्यर्थञ्च गूढम् ।

स्मारयति स युवतीः चीरापहरणं पुराणम्,
स्मारयति स पुनो रासरचनं पुराणम् ।

अथ तरुण्यो मनसा ह त्वाद्रीबभूवुः,
प्रार्थयन्ते हरिं, नावमन्यस्व त्वित्थम् ।
हन्त ! विस्मर्यते युवतिभिः खल्वग्रगमनम्,
आशयितुं समारब्धवत्यो दधिमक्खनानि,
हरिं सवयस्यं समोदं खलून्मुक्तहृदयाः ।

भुञ्जन्ति कतिपयाः पयस्यं च मधुरम्;
भुञ्जन्ति कतिपयाः क्षीरसारं च स्निग्धम्;
भुञ्जन्ति कतिपयाः दधिनवनीतं समोदम्;
प्रथयन्ति सर्वे प्रीतिभोजं ह्यविरतम् ॥

व्याकीर्णानि मिथुनानि खल्वाम्रविपिने,
भोक्तृ–परिवेषिकाणां घनच्छायश्लक्ष्णे,

सद्योरचितपर्णपात्रेषु हरितेषु, हन्त !

अहन्तु सभाजयामास कृष्णं, सजनि हे !
केवलदधिखादनेन सुप्रीत्या, सजनि हे !
न विस्मर्यते मया तत्पुण्यकालः, सजनि हे !
न विस्मर्यते मया प्रणयस्वादः, सजनि हे !!

X X X

[ च ]

एकदा वाद्यते मुरली स्म हरिणाऽभिप्रायपूर्वम्,
एकत्रायते युवतिसङ्घः तत्सम्मुखं त्वाम्रकुञ्जे।
प्रस्तूयते 'झूलनं' युवतिभिस्तु विज्ञाय बुद्धिम्,
पश्य, दोलाऽभूत् रचिता विपिने पूर्वमेव ।

प्रेङ्खणं रज्जुलग्नं लम्बते पीवरतरुभुजेभ्यः,
उपकल्पयति च विषय योग्यं तु तरुणीजनेभ्य ।
समारोहन्ति त्वरया सलीलं किल स्पर्धमाना,
ललितं च समतुल्यवेगेन हरिणा ह्युपचर्यमाणाः ।
आरोपयति मामन्ते विनीतं सहासं स्निग्धं मुरारिः,
समुत्थाप्य भुजयोः स्त्रयोः खलु युवतियूथमध्ये ।

अवास्कन्दयत् करकमलेन दत्त्वा प्रहारम्,
लीलानागरः प्रेङ्खणं च दोलायमानम् ।
प्रारभते झूलनं किल हासपरिहासमध्ये,
प्रेङ्खोलयति दोला क्षिप्रमुल्लासपूर्वम् ।
उच्चैस्तु नीचैस्तु क्रमशः सव्यापसव्यम्,
उदीच्यामपाच्यां क्रमेण ह सवेगम् ।

भीषिताश्च युवत्योऽनुबध्नन्ति सर्वाः,
अन्योन्यं प्रगाढ च वेगो विचित्रः !
तदा विहसति स नन्दललनस्तु कुटिलः;
परिष्वजते च निकटस्थतरुणीमनियतम्;
प्रहर्षयति लालयति चुम्बयति तां प्रसह्य ।

द्विवारं त्रिवारं पतामि स्म भूम्याम्,
उन्नामयति मां क्रोडे स्वकीये तदैव ।
प्रेङ्खोलयति झूलनं तु ह्यबाधमविरतम्,
अहं प्लावयामि च तस्य परिश्लेषबन्धे ।
मामुद्दिश्य सख्यः प्रपश्यन्ति तिर्यक्—
श्मीलन्त्यः समौनं तु दोलायमानाः ।
अहं तु भीषिता नामयामि सलज्जम्,
वा मे लोचने जानतो तदभिप्रेतम् ।

ननु झूलनं चचाल चिराय च विपिने,
श्रावणीये विकाले समोदं तु सघने,
सूर्ये लम्बमाने युवत्यः प्रार्शीथलाः,
अतिस्विद्यन्ति त्वङ्गेषु त्वापादमौलिम् ।
विरमयितुं प्रेङ्खणं प्रार्थयन्ते मुरारिम् ।
बीजयति तास्स पीताम्बरेण समूह्य,
वातावरोधे घनच्छाय वपिने सुलालितम् ।

युवतिषु प्रस्थितासु गृहाणि तु, वार्यै
छलिना मोहनेन क्षणंध्वस्तथैव ।
कर्णे जपति वा नीचस्वरेण तु प्रणयम्,
अतिचुम्बयति मा, पृच्छति मे तु कुशलम् ।
प्रतिवक्तुं न प्रभवामि लज्जाभिभूता,
मोचयित्वा ग्रह प्रद्रवामि च त्वग्रे ।
पृच्छन्ति सख्यः, 'मुरारिस्तु रसिकः,
किमवदत् तुभ्यं रहसि, वद, हे राधे !

खल्वामन्त्रयति व्यङ्ग्यविशिखान् मदीयम्,
मौनित्वं सखीनां च मदनाहतानाम् ।
कथयन्ति, राधा चतुरा विदग्धा,
वै वचनैर्मधुरैर्मुरारिं विजयते ।
अल्पवयसी उपरितः तु सरला,
नोन्मीलयति च रहस्यं तु प्रेम्णः ।
उपकल्पितं जानाति सर्वं च तस्य,
व्यपदिशति त्वनभिज्ञान परन्तु ।

राधे ! वद तर्कितं किं पुनश्च,
वैणविकेन नटनागरेण तु ह्यग्रे,
लालयितुं प्रणयबालवृक्षं च नस्तु ।
त्वं प्रेयसीतल्लजाऽसि तु तस्य,
भावयामस्त्वस्मद् भागधेयम्,
तव भवने वयस्याऽस्मदीया ।

सखि, त्वमधिशास्सि व्रजमोहनं च,
आदितः सदैव, विद्मो वयं च ।

चीरापहरणं च मार्गविरोधम्,
राजस्वव्याजेन इव पूर्वकाले,
झूलनमिदमपि ज्ञात त्वया तु,
प्रागेव, राधे, न तूरीकरोषि ।
'पतघटे' किल श्रैष्ठ्यं त्वदीयम्
प्रस्तापितं बहु प्रेमिणीराजिमध्ये,
यदा स रुरुधे ह प्रायेण मार्गं,
त्वामेव रहसि वा संलापहेतोः,
नूनं वावृत्यते किल मुरारिः,
त्वामेव परमं, जानाति लोकः ।
कथयस्व, राधे, किं स चिकीर्षति,
खल्वग्रकाले प्रणयपोषहेतोः ।"

X X X

गृहमुपजगाम त्वीषत्तमिस्रे,
प्रत्यैक्षिष्ट जननी मा तु चिरेण ।
प्रविवेश नैज प्रकोष्ठं छलेन,
बिभेमि स्म तस्यास्तु मन्योरथैव ।

X X X

रागश्छलति वञ्चयति वंशवेणुः,
न जज्ञौ तदानीं त्वबोधा बभूव ।

कथं गमयेयं तु कालं च विषमम्,
नाना व्रजविलासं, न जाने, सजनि हे !

X X X

क्षिप्यन्ते व्यङ्ग्यविशिखाः भातृभार्याजनेन हि मर्मोपरि,
श्वश्रूसत्तमा तजयत्यस्मानद्यापि नामनि कुलस्य,
परमियं 'लाडिली' वतते तु चिराय गृहादन्तरेण ।
युज्यन्ते कुलसम्मानमानानि खल्वस्मत्कृतेहि,
निष्क्रमितुं न शक्ता गृहाच्च यथेष्टं परीवादभयतः ।
कर्णे कर्णि जापः प्रसृतवान् पल्ल्यां त्वस्याश्च विषये,
मलिनयन् कौलकीर्ति समाधाय किल मायिनं नंदतनयम्।
चित्तं,पूज्यो न जानाति सम्यक् तु तस्याश्च स्वैर चरित्रं,
स्वपिति सुखेन स्वकक्षे त्वनघवच्च मृदुलोमतल्ये स्म ।
परिवेषयति स्नेहपूर्वं मधुरभोज्यपूर्णस्थालं श्वश्रूः तस्यै,
तर्जयति तां प्रकाशं तु लोकस्य बुद्ध्यां, जानाति घोषः,
तस्यां सुस्निह्यति किल समुत्साहयति तत्स्वच्छन्दचरणम् ।

ममकृते जननी भूरिशो भर्त्सितास्ति,
इति स्मारं च स्मारं, दुःखीयामि बहुशः ।
उपलालितवती खलु प्रणयस्य विटपम्,
न स पुष्प्यति, अहो, दुःखीयामि बहुशः ।
भद्रासन ह्यध्यास्ते सुसुखं मुरारिः,
किन्त्वहमवमानिता, दुःखीयामि बहुशः ।
न जज्ञौ वैणविकस्य शील तु पूर्वम्,
निर्व्यलीका सती, दुःखीयामि बहुशः ।
आह्वयामि लोकं च देव च द्रष्टुम्,
सखि, स क्रूरायते, दुःखीयामि बहुशः ।
मुरली वञ्चयति मधुरागेण, हन्त,
इत्यतर्क्यं मया, दुःखीयामि बहुशः ॥
सखि, न जाने, कथं व्रजविहारी,
बत स्नेहं दूषयति, दुःखीयामि बहुशः ॥
स्मृतयोऽवतरन्ति तु मानसतलं, सखि,

अर्दयन्त्यश्च प्राणान् क्षीणान् तीव्रम् ।

X X X

[ छ ]

समुच्छलति मानसे होलिकायास्तु बिम्बम्,
समुल्लासगर्भं, सजनि हे, प्रसह्य, प्रत्यक्षम् ।

अथ कूजन्नूपुरमेखला: युवतिसङ्घा: विदग्धाश्च,
कज्जलकान्तनयना: चपलवृत्तयो वेणिलम्ब्रायमाना:,
वै नानावर्णवसना नानाभूषिता लालिकाहासमग्ना:,
समुत्फुल्लवदना: विजितफुल्लकमला: चापल्ययुक्ता:
सुसज्जिता: श्रीखण्डागुरुमृगमदपायस-पूरिताभि:,
दृतीभि:, गायन्त्य: सुगीती: कलमधुरकण्ठपूर्वम्:,
उन्नह्यन्ति व्रजवीथिकासु चतुष्पेषु किल रक्तभाला:।।

आजग्मु: गेहं मदीयम,
आह्वयामासुश्च उच्चै.-
"राधे ! किं त्वं करोषि
न वेत्सि रङ्गोत्सव:
कल्प्यते च त्विदानीम्
खलु वैणविकेन सद्य: ?
आगच्छ त्वरितम्,
प्रतीक्षते 'नन्दलाल.' ।
वयमप्यातुरा स्म:,
खेलितुं तेन साकम्
खलु रङ्गोन्मिश्रहोलोम्,
नूनं लज्जयन्त्यस्तु मदनम् ।"

प्रददावनुमतिं जननी त्वौदार्यबुद्ध्या,
हन्त, होलिकोत्सवाय, मुदिता भवामि ।

मुरारिर्मिलितो ह त्वचिरेण पदवौ ।

स्यूतं धारयन्नरुणचूर्णेन पूर्णम्,
वामहस्ते लीलया लम्बमानम् ।

ननु पिच्छिलपिच्छमौलि: शोभायते मस्तके तु;
विलसति कनकविरचितकुण्डलं कर्णयुग्मे;
किल काकपक्षस्तु बाभ्राजते बह्वधस्तान्मौले:;
प्रलम्बते रत्नप्रणिहितप्रालम्बिका कम्बुकण्ठे;
अथ स्वर्णकेयूरं भृशं शोभते बाहुयुगले स्म;
कार्तस्वरनिर्मित-मणिमयकङ्कणं भूषयति पाणिपद्मे;
किङ्किणी विक्वणति मधुरमतिकम्रे च कटिप्रदेशे;
झणझणायते मञ्जरीश्च सुललितं श्लक्ष्णे हि पादमूले;
मृगमदतिलकं देदीप्यते खलु पीयूषसंनिभललाटे;
मर्मरं कुरुते च पीताम्बरं नीलमशोमनझर्झरीके;
प्रस्फुरच्छीलमणिबीज–दीपितदन्तावली चोज्ज्वलम्;
रदच्छदयो: चकास्ति,विहसति वञ्चकमणि: कोमलम्।।

रङ्गखेल: प्रारभ्यते त्वचिरेण उभयत:,
आवीरारुणचूर्णानि प्रचलन्ति पुरत: ।
दिगन्तमम्बरं पूर्यते रक्तमेघच्छदैश्च,
भूमि: प्रच्छादिता शोणवर्णै: कुथैश्च ।

श्यामसुन्दरतरुण्य: प्रसरन्ति त्वग्रे खलु मन्दमन्दम्,
मुञ्चन्ति चूर्णाञ्जलिं खलु इतरेतरं प्रति च सलीलम्।
कुङ्कुमवर्ष: प्रारम्यते युवतियूथैस्तु ललितम्,
नटवरो निगृह्यते भुजलतासु ताभ्यस्तथैव ।।
अञ्जन्ति तस्याननं रक्तलेपैश्च प्रचुरै:,
क्लेदयन्ति ह्यामूलचूलं कुङ्कुमकुथैस्तु ।
पातयामि कुसुमरसकलशं यदूर्ध्वं सलीलम्,
तदा चेष्टते मां ग्रहीतुं किल पाणिबन्धे स गृध्नु: ।
अपसर्पामि ग्रहणात्,परमलिपन्मद्वक्त्रं चूर्णेन गाढम्,
कणा वै पतन्ति नयनयो:, जनयन्ति व्यथनं च तीव्रम् ।
मां पर्यस्वङ्क्त च रसिक: चिरेण प्रगाढं, सहासम्,
अप्लावयन्मा च चुम्बै: सुचिरं च नयने तु पिहिते ।

तत्पाशं च प्रस्वेदजननं स्मरामि प्रत्यक्षम् इदानीम् ।
प्राङ्न्यायमेकं प्रापुः तरुण्यस्तदा खलु नवीनम्,
भावयितुं मां प्रयसो-तल्लजां वै तालाङ्कबन्धोः ।

अहह ! होलिका समायति वर्षे च वर्षे,
अथ वेलायते हर्षसरिता व्रजवीथिकासु ।
परं मौदो न हासो न लासस्तु मह्यम्,
विषीदामि कृष्णं बिना रात्र्यहनी, सजनि हे !

रागश्छलति खलु मुरलिका ठगति च,
न जज्ञौ तदानीं त्वबोधा बभूव ।
कथं गमयेय तु कालमिदानीम्,
नाना नन्दलालं, न जाने, सजनि हे !
कथं तारयेयं च जीवनतरणीमिदानीम्,
नाना नन्दललनं, न जाने, सजनि हे !!

X X X

[ ज ]

स्मरामि च, सखि हे, सम्मन्त्रणं तस्य खलु मध्यरात्रे,
मधुपुरगमनात्पूर्वं ह्यनुरागकरणं त्वतिलालन वा ।
स भणितवान्, प्रत्यागमिष्यामि लघु खलु मिलित्वा,
मथुराधीश्वरं मातुलमज्ञातकल्पं राजाधिराजम् ।
परं प्रत्याववृते न शौरिस्तु दिवसाश्च मासा व्यतीताः,
पुनो व्रजपुरीं, हा धिग् जीवनं, हा धिग् भागधेयम् ।
संवादः प्रस्रवति काले च काले समधिकृत्य वाधञ्च
तज्जीवितस्य किल कंसेन विहितं, स्मारं च स्मारम्,
प्रकम्पे, सजनि हे, चोद्विग्नमनसा प्रदीना अशरणा ।

किञ्चित्कालेन जज्ञौ स व्यापदयामास कंसम्,
अथ प्रस्थापयामास मातामहं मधुपुर्यास्तु राज्ये ।
अचिन्तं निवर्त्स्यति ततो नटवरो वै मुरारिः;
संस्मृत्य प्रेम्णस्तु प्राक्तनचरितानि ह्यचिरेण नूनम्

परं कामनावल्लरी जीर्यति शीर्यते खल्विदानीम्,
यत स्यादनुरज्यमान.संवाहिकायां नवलप्रेमगृध्नुः,
स्वच्छकमलं प्रवहति त्वध. हृर्याद्रिशिखरात यथव।
अवसीदयन्ति तरुण्यः परिध्याय विस्रम्भभङ्गम्,
निन्दन्ति गड्डुपृष्ठनारीं स्वकीयस्य दौर्भाग्यहेतोः।
मां प्लावयन्ति ह्यजस्र किल प्रश्नवर्षै —

"राधे ! कथयस्व प्रत्यागमिष्यति कदा नन्दसूनुः,
तरुणीचित्तचौर. मुरलीधरो नटवरो व्रजप्रकाशः?
रक्षसि त्वं तस्य मर्माणि प्रणयस्य नूनम् ।
अधिगतं किमपि दूत्यं नवीनं मथुरानगर्याः.
कुब्जारमणस्य रतिलोभि-तालाङ्कबन्धोः ?
सम्प्रेषयितव्या त्वया वार्ता ह्यस्मदीया स्म—

कुब्जायै वयं स्वागत व्याहरामः,
अविलम्बं निवर्तेत महानुभावः,
नवलां समादाय समादरेण,
उपालप्स्यामहे तं वयं न कदापि ।।"

न जाने कथमुत्तरेयम्, सजनि हे !
कथं वा व्यनज्मि मदीयन्तु व्यथनम्,
एवं चपेयं कथं युवतिग्रामम्
किल समुत्सुकमनः ऊह्यमानम्,
वियोगार्णवे भूरिशः सर्वकालम् ?

कियद्दूरं सुभगमधुपुरी वर्तते स्म
कामये छद्मवेशे तत्रैव गन्तुम्,
द्रष्टुकामा ह्यभिचारयन्तीं 'नवेलीम्',
गृह्णाति या यस्य चेतस्तु सबलम् ।
परं नोत्सहे साधयितु च कल्पम्,
धिग् भीरुतां ! धिक्क्लैव्यमथैव !

अनुदिनं प्रतिपालयामि दूत्यमवाप्तुम्,
पृच्छामि पथिकान्, रुध्वा च मार्गम् —

'कस्माद् बन्धो ! मथुरानगर्याः ?
दद्रष्ठ श्यामं च मुरलीधर वा,
सुवक्रनयनं मदनकान्तिचौरम्,
देदीप्तभालं तरलकाकपक्षम्,
पिच्छिलपुच्छमौलिं गुञ्जाकमालम्,
सुदीघरश्मिं ह्यथच कम्बुकण्ठम्,
मदनचापकुञ्चित – भ्रूभ्यामुपेतम्,
पीताम्बरं किल ह्यरविन्दवदनम्,
सौन्दर्यसिन्धौः खलु रत्नश्रेष्ठम्,
माधुर्यखन्यास्तु सुकुमारसृष्टिम्,
वचने विदग्धं, हसने च छलिनम्,
गमने च कुटिलं, चरिते विनीतम्,
चपलं, काले च काले गभीरम्,
भ्रामर्यप्रचण नवलस्नेहरसिकम्,
परमश्रेष्ठमल्लं कंसस्य वधकम्,
अपि प्रपच्छ सः पन्थानं त्वदीयम् ?

'अनु व्रजं' कथ्यते वा त्वया तु ?
यद्येवं, त्वमूहसे चित्तवृत्तिम्,
तात्कालिकी वा मुरारेः ?
कच्चिदवदद् राधिकायाश्च विषये ?
दीयते कोऽपि प्रेषः तस्यै, हे पथिक !

अहमेव राधाऽनुरज्ये च बाढम्
तस्मिन्, ग्लायामि दिने दिने च ।
आश्वासयामास प्रस्थानसमये
प्रत्यागमिष्यामि ह्यचिरेण पल्लीम् ।
मासा व्यतीता, नयने च स्फुटिते,
मार्गं च सेवे, दिने दिने वा ।
पथिको न कोऽपि मिलितः परन्तु,
यः श्रावयेन्मां तस्य तु चरितम् ।
जज्ञिथ, पथिक कुब्जानामधेयाम्
कंसस्य दासीं च तारुण्यसेव्याम्

सौन्दर्यगृध्नोः प्रभोग्यां कुटिलाम्,
किल करस्पर्शेन कृष्णस्य विहिताम् ?

कुतो वर्णयेयं छलिनस्तु रागम्,
परिचारिकाचरमधिकृत्य चैवम् ?

बाढं, प्रियदर्शनाऽस्ति संवाहिका वा,
दिष्ट्याऽधुना यन्नैके वदन्ति ।
तदपि मुह्यते केवलयौवनेन,
मदनमोहनो विस्मृत्य त्वतीतम् ।''

पथिक एकस्तु चपति मां, हन्त,
कथयिष्यामि वृत्तं त्वदीयं च नूनम्,
तस्मं शीघ्रकं, धेहि धैर्यममन्दम् ।
परं दृष्टिक्षेत्रं न पुनरवततार स्म
स ह्यध्वनीनो ह्यद्यापि, सखि हे !

रागश्छलति खलु मुरलिका ठगति च,
न मन्ये तदानीं च सरला बभूव ।
कथं गमयेय तु कालमिदानीम्,
नाना नन्दललनं, न जाने, सजनि हे !

X X X

[ झ ]

उदधवप्रसङ्गं स्मरामि, सजनि हे !
विह्वलीभवन्ती च निर्विण्णमनसा ।
कृष्णस्य वयस्यः परमब्रह्मज्ञानी,
समलोष्टाश्मकनकोऽरागोऽलिप्तः
ह्यधिक्रियते न वृत्तेन सांसारिकेण
कमलपत्रमिव कमलेन, कथयन्ति विज्ञाः ।

एकस्मिन्प्रभाते रथो दृश्यते,

पथारूढः सुललितं व्रजमभिमुखम्,
मधुपुर्यास्तु जनयन् प्रमोदं भृशम्
व्रजलोकचेतस्सु त्वाकस्मिकम् ।
पीतवर्णा पताका तु दोधूयते
पवनवेगे हि तीव्रे बाभ्राजते ।

स वर्णः स वेषः स एव च मौलिः,
प्रणयेन नुदितः समायाति शौरिः,
इति तर्कयन्ति चाबालवृद्धाः
तरुण्यो जनन्यो मोहाभिभूताः ।

वार्ता व्यापिता घोषे क्षिप्रकम्,
नन्दलालः समायाति वा व्रजपुरम् ।
निषसाद गृहावग्रहण्यां तदा,
शून्यमनस्का विषण्णा त्वहम् ।
आवव्रजुर्वयस्याश्च मा सत्वरम्,
प्रोचुः एककाले तूच्चैस्तमाम्–
"आगच्छ, राधे, आगच्छ, राधे !
आगच्छ, हरिप्रेयसीतल्लजे !
सखि, आयाति नागरमणिः शीघ्रकम्
ते दिवसाः समायान्ति खलु साम्प्रतम्,
हर्षका मोदगर्भाश्च ह्यावश्कम् ।

अत्रान्तरे खल्वेके वदन्ति स्य,
पश्यति हरिस्त्वित एव सुव्यक्तम् ।

X X X

चित्रं, कुतो वै हसितं न वर्तेत,
ग्रन्थितं तस्य वक्त्रे सुरम्ये स्म ?
न गुञ्जाकमालो न वा च मुरलिका,
संदृश्यते, किं च घटते नवीनम् ?
कुतो गोरसानां गृध्नुश्च, हन्त ।
कुतो रासरचकः, कुतः चीरहरकः ?

अत्रान्तरे—
उदधवो दृश्यते कृष्णवेशः समौलिः,
भग्नाशतरुणीजनो व्यपगतो वा सदुःखम् ।

X X X

नन्दप्रमुखा मुख्या ह्यभिवादयन्ति,
कृष्णस्य मित्रं परमार्थतत्त्वस्य विज्ञम् ।
तमानयन्ति ह्यातिथ्यभवनं समानम्;
समर्चयन्ति खल्लतिथिं दधिरोचनेन;
सम्प्लावयन्ति सत्कारकरणैश्च भव्यैः ।
केचन बीजयन्ति चमरैः सुदिव्यैः;
केचन तच्चरणौ प्रक्षालयन्ति;
केचन कल्पयन्ति वा स्निग्धशयनम्
मृगमदसेवनीयमुपधानविष्टम् ।
केचन ह्यानयन्ति रजतभाजनानि;
भरितानि विविधैः सुस्वादुभोज्यैः,
पूपैः सार्पिष्कपिच्छिलप्रणीतैः,
केसरयुक्तपैठरभावितकरम्भैः,
दधिभक्ततेमनतरलापयस्यैः,
सन्धितशिखरिणीलवणैः मरीचैः,
धन्यासुषवीजरणश्रृङ्गवेरैः,
कूर्चिकाशर्करामिश्रमधुमोदकैः ।

उद्धवं भोजयामास किल नन्दराजः,
विनम्रं सुललितं सङ्कोचपूर्वम् ।
समाचक्षते, प्रार्थयते सविनयम्—

"अश्नीतादिदमपि, स्वादस्व इदमपि,
रसयस्व इदमपि, प्रलीढामिदमपि ।
सुशीघ्रं संस्कृतं वा भवतो ह्ययोग्यम्
परं स्नेहसिक्तं, परं भावभक्तम् ।
अतो भुङ्ग्ध सर्वं सुप्रीत्या प्रकामम् ।"

अथोद्धवो जेमनेन तु स्वस्थो बभूव,
पृच्छ्यते नन्दराजेन कृष्णस्य कुशलम्–

"अपि सुस्थं प्रसन्नं तु व्रजजीवनम्,
अप्यापृच्छ्यते त्वागमनात् पूर्वम्,
कंसारिः त्वया, दीयते कस्तु प्रेषः ?"

X X X

समायाति गृहमेधिनीनां सङ्घस्तदैव,
उद्धवदर्शनौत्सुक्यलग्नो तथैव ।
वा कृताञ्जलिः सन्नभिवादयति तम्,
"नन्दरानीं" पुरस्कृत्य किल मन्युमूर्तिम् ।
सा तु उवाच गलदश्रुवाण्यां प्रदीनम्–

"कथय, मे 'लालो' वर्तते कुशली च स्वस्थः ?
कथं स स्वपिति, वा कथमवबुध्यते सः ?
कथ भुङ्क्ते तु कतिधा दिने, किम्
अश्नाति वै तस्मिन राजसदने ?
किं विन्दति कालशेयं नवनीततक्रे,
मधुक्षीरपयस्ये गव्यं हविष्यम्
मस्तु द्रप्सं स्निग्धं हैयङ्गवीनम् ?
सपीतिश्च सग्धिश्च किल तस्य रीतिः,
किलाचर्यते ह्यभ्यासोऽयं राजसदने ?
केनावबोध्यते सः प्रत्यूषकाले ?
केनानीयते तस्य मधुप्रातराशः ?
केनारञ्जयते यदि वा खिन्नचित्तः ?
केनाराध्यते यदि वा मन्युग्रस्तः ?
केनास्नाप्यते सम्यक् तु सः यथाकाले ?
केनाधार्यते खलु वसनं नवीनम् ?
केन सम्मृज्यते तस्य कौशेयकेश ?
केन परिशुध्यते तस्य कर्मारवेणुः ?
केन संगुफयते पिच्छिलपिच्छ-मौलिः ?
केन संग्रथ्यते किल गुञ्जाकमालः ?

जानामि, "लालः" प्रयुच्छति, हे श्रीमन् !
विच्यवते नित्यकृत्यात् साहाय्यहीनः ॥

कुतो विस्मरति गोकुलग्रामभूमिम् ?
कुतो विस्मरति वृन्दायाः प्रकृतिम् ?
कुतो विस्मरति वल्लवानां वृन्दम् ?
कुतो विस्मरति गोधनं तस्य प्रेष्ठम् ?
कुतो विस्मरति कुण्डोध्नीमचण्डीम् ?
कुतो विस्मरति सुव्रतां धेनुजातम् ?
कुतो विस्मरति दधिनवनीतराशिम् ?
लभ्यं केवलं गोकुलग्राममध्ये ?

अथवा स्मर्यते तेन करुणः प्रसङ्गः
यदोलूखलेनाबद्धो मया सः,
नारीणामुपालम्भवर्षेण, हन्त !
धात्रेय्यभवं तस्य जानामि सत्यम्,
बिभर्मि स्म त तु जनन्याः बुद्ध्या ।
कथय देवकीं प्रेषयतु सा च शौरिम् ।
कतिपयदिनेभ्यस्तु दयतामवश्यम् ।
वक्षो दीर्यते, खलु नेत्रे समयतः,
दर्शय मां तु 'ललन', यदुकुलप्रदीपम् !"

उद्धवः सान्त्वयामास यशोदां वचनैः
विसर्जयामास मधुरैः सुगेहं सविनयम् ।
ततो नन्दराजः कथयते विनीतम्—

'बार्हस्पत्यशिष्यः मुरारेर्वयस्यः,
वृष्णीनां मन्त्री, यदुकुलप्रमुख्यः,
अनूचानश्रेष्ठः परमतत्त्वज्ञाता,
लोकनयविज्ञो धर्मधरधुरीणः,
इति प्रसिद्धोऽसि विश्वे, जानन्ति सर्वे ।
अत्रागम्यते भवता कस्य हेतोः,
शुश्रूषुर्वर्तते व्रजलोकः समग्रः ।"

नन्दं तत उद्धवः प्रत्युवाच—
"गोकुलगोपमुख्य ! शृणु मे निमित्तम्,
कृष्णो राजपुरुषः, प्रणयति राज्यकार्यम्,

वसुदेवस्य सचिवः, प्रजानां च स्निग्धः,
खलूपलभते न समयं राष्ट्रियपदेभ्यः ।
अभिरक्षति स्निग्धं व्रजवासस्मरणमविरतम्,
वात्सल्यस्नेहं ह्यशितं चरितं भवद्भिः ।

स विस्मर्तुं न शक्नोति कञ्चननगर्याम्,
विश्वासयति त्वां च यशोदां जननीम्,
प्रत्यागमिष्यति व्रजं तु ह्यचिरेण नूनम् ।"

अत्रान्तरे गोपिकानां सङ्घश्च,
प्रत्यावाहनीयः सम्बोधनार्थम् ।"

X X X

वार्ता व्यापिता कृत्स्नव्रजमण्डले वा,
सम्मिलन्ति युवत्यः शुश्रूषवस्तु
शीघ्रं च प्रेषं मुरलीधरस्य,
संशयं भावसन्धिं त्वास्थाय युक्तम् ।

अथोद्धवः प्रारेभे तु वक्तुं गम्भीरगिरया,
समाधाय चित्तं ह्यश्रृण्वन् युवतयः—

"वार्ता युष्मदीया प्रपेदे तु कृष्णम्;
विचलितो बभूव निशम्य च वृत्तम् ।
विश्वासयति ह्यध्युषितं च हृदयम,
व्रजसुन्दरीभिः द्युनिशमस्मदीयम् ।
प्रत्यादिशति सान्त्वयितुं च वस्तु,
तत्त्वं निरूप्यः निःसङ्गबुद्ध्या ।

बुध्यध्वे न कृष्णस्य रूपं यथार्थम,
प्रान्तयितुं प्रमाद. चरितम् च तस्य,

व्रजलीलानां सीमसु, तरुण्यः ।
स ईशस्य पूर्णावतारो धरायाम्,
कामयते निर्मूलयितुम् अधर्मम् ।
अवन्धनीयः ततः तामसरागपाशे,
अरन्ध्वं तेन सार्धं चिरेण ह्यबाधम् ।
तमाकारयति लोकधर्मस्त्विदानीम्,
लज्जमानं तदपि प्राप्य वै वाग्दण्डम्,
व्यथमानं च संस्मृत्य प्रणयस्य भोगम्,
युष्मदीयं पुरा वृन्दायास्तु विपिने,
यमुनायाः सैकतप्रदेशे सितायाम् ।
पथिका वर्णयन्ति तस्मै सम्पूर्णवृत्तम्
व्रजकामिनीनां सत्यम् अशून्यम् ।
विरमयत ततो जल्पनं च विलपनम्,
बाधमानं तदीयं सङ्कल्पसत्यमवश्यम् ।
निवेदयामि त्वतीतं खलु क्षुद्रसीम्नः,
लोकनिरपेक्षकामस्य चौदार्यबुद्ध्या ।
अनुजानीत ह कृष्णमवाप्तुं च ख्यातिम्
धर्मसंस्थापनस्य भूगोल—मध्ये, युवत्यः ॥"

प्रत्यूचु तरुण्यो लुलिताः परिदूयमानाः—

"त्वं वदसि धर्मविषये, विचित्रम् ।
कोऽयं धर्मः सुषिरीकरोति
किल तरुणीनां हृदयानि क्रूरम् ?
प्रलोभयामास बालाः पूर्वं छलेन,
वै कपटेन जालेन नानाविधेन ।
वादयति वेणुं काले ह्यकाले,
शब्दयति ह्यस्मान् प्रातश्च नक्तम् ।
प्रबाधते नस्तु मार्गे कुमार्गे ।
आयासयति च रहसि वा प्रकाशम् ।
प्रभाषते व्यर्थतस्तु त्वहेतुम्,
संश्लाघते नश्च रूपमतर्क्यम् ।
अपहरति चीराणि ह्यवगाहने नः,

पातयति कुण्डं नीरेण भरितम्,
क्लेदयति कञ्चुलिकां, जानीहि, दुष्टम् ।
विरचयति रासनृत्यं निशीथे स्म,
अवहेलयति लोकधर्मं निकामम् ।
परिरम्भयति चुम्बयति च प्रगाढम्,
प्रेङ्खोलयति झूलने च सलीलम् ।
अवरुणद्धि च युवतीः घनच्छायांविपिने,
प्रभिक्षते राजशुल्कम् अयोग्यम् ।
प्रभणक्ति वै शिष्टचरणस्य सीम्नः;
होलिकायाश्च रङ्गोत्सवे खलु ।
बोधयति पुष्णाति कामञ्च विविधम् ।
सन्तापयति तरुणीजनं च प्रक्रूरम् ।

स एव संस्थापयिष्यति तु धर्मम्
भूमण्डले, क्वयङ्ग्यमिद विचित्रम् ।
स धर्मः कः, वञ्चयति च सुस्नेहम् ?
स धर्मः कः, न्यककुरुते च प्रेम ?
स धर्मः कः, विलापयति तु युवतीः ?
स धर्मः कः, खण्डयति वा तु वचनम् ?
स धर्मः कः, मेमिलति तु पथिकान्,
संवेत्ति प्रेमणस्तु वृत्तं ह्यविचलम्,
पर नो प्रेषयति कमपि प्रेषं प्रक्रूरम् ?

कथ्यते कामः क्षुद्रस्त्वया तु,
परं कामो न हेयः, निसर्गस्य हेतुः ।
एकाकी न रेमे स पुरुषो, वदन्ति,
आस्थाय द्वित्वं प्रलेभे च तृप्तिम् ।
त्वं ब्रह्मज्ञानी त्वसंवेदशीलः,
न जानासि कामस्य तत्त्वं महत्त्वम् ।
सभाजयामश्च नवनीतचौरम्,
प्रज्ज्वालयामः प्रेम्णः प्रदीपम् ।
गृणामो हरेर्नाम नक्तं दिवा च,
समुदीरयामः चरितं तु तस्य ।

रुदिमो हसामः खलूपविशामः
तिष्ठामो वयं वैणविके सदैव ।

पश्य खलु,
प्रेमा ईश्वरः, प्रेमा च निसर्गः;
प्रेमा नन्दलालः, प्रेमा युवतयः;
प्रेमा सूर्यतनया, प्रेमा कदम्बः;
प्रेमा व्रजस्य लतावीरुधाश्च;
प्रेमा शर्करिला किल व्रजपथाश्च;
प्रेमा गोधनं, प्रेमा धावनं, प्रेमा रम्भितम्;
प्रेमा व्रजधरा, प्रेमा व्रजनभः, प्रेमा व्रजपवः;
प्रेमा पितरः, प्रेमा मातरः, प्रेमा बान्धवः;
प्रेमा च जगतीप्रपञ्चः, हे उद्धव !
सृष्टिर्जायते प्रेमणि तु, हे उद्धव !
सृष्टिर्वर्तते प्रेमणि तु, हे उद्धव !
सृष्टिर्वर्धते प्रेमणितु, हे उद्धव !
लोकनिरपेक्षो न प्रेमा अत, उद्धव !
युच्छसे तत्त्वग्रहणे, तत, उद्धव !!'

उद्धव प्रत्युवाच समाधाय बुद्धिम्,
कृतनिश्चयः उन्नमयितुं प्रवृत्तिम्,
तरुणीनां प्रेम्णस्तु परमर्थितत्त्वम्—

"भो भोः युवतयः ! कल्पयथ परमार्थवस्तु च यूयम्,
कृष्ण पूर्णब्रह्म, ह्यलिप्तमलिप्यं त्वसक्तम् ।
स परमार्थसत्यमनवगम्यमानस्तु स्थूलबुद्ध्या;
केवलयोगिन प्रभवन्ति द्रष्टुं च ज्ञातुं तमात्मरूप समाधौ;
समाधाय चित्तं, नियम्य च वृत्तीः, किलसमुपेक्ष्य संसारश्लेषम् ।

तमन्तरेण सर्वमसत्यं ह्यतत्त्वं च परमार्थदृष्ट्या हि वित्त ।
रज्जोर्दर्शनेन तु सर्पस्य भानः खलु विप्रलभते विमूढान् ।
यद्यपि सर्पोऽसत्यः केवलं च स विद्यते कल्पनायाम् ।
कृष्णः सर्वव्यापी, चेतनो निर्विशेषो ह्यन्तर्भवो मानवानाम्;

अज्ञानतः तत्त्वरूपं समाच्छाद्यते मायया भूतदृष्ट्याः;
आवरणविक्षेपशक्तिद्वयेन समाच्छन्नवस्तु विभाति च विविधम्;
खलु न चित्यते त्वात्मनस्तत्त्वरूपं, गृह्णाति बुद्धिमसत्यं जगत्तु;
आत्मा किल निर्विकारो, युवत्यः, नह्यृष्यति,न सादति न दुःखीयते ।

ततो व्यर्थः विलपनमुपालम्भनम्,
पश्यत परब्रह्म कृष्णं खल्वन्तरेषु,
तत्रैव संविद्यते स ह्यनुभूयमानः,
भूतलीलास्त्वास्वास्वादिताः पूर्वकाले,
अतत्त्वम्, अवस्तु, त्वज्ञानजनिताः,
विस्मरत इमाः, स्वास्थ्यलाभं कुरुध्वम्'' ॥

तरुण्यो जडधियः, चिन्तयन्ति नितान्तम्,
संश्रुत्य तत्त्वाख्यानं ह्यकल्प्यम् ॥
प्राहुः-"उद्धव! किं चित्रं वदसि,चेतयते तु सत्यम्,
कृष्णः तत्त्वं, सत्यं, ह्यखण्डनीयमस्मत्कृतेऽपि,
परं संसारो हि मिथ्या, प्रतिग्रहणीयमिदं न कदापि
जनयति रज्जुश्च सर्पस्य भ्रान्ति सत्यमिय खण्ड्यते च शीघ्रम् ।

त्वरितं यदा मानवो लभते च बुद्धिं तदीयाम् ।
अधिवसामो वय संसारं ह्यनुभूयमानं सततं सुव्यक्तम्,
यत्र चन्द्रः चकास्ति, रविर्दीप्यते, तारकाः स्फुरन्ति
सनियममुद्धव, संसारोऽयं गण्यते सारहीनः कुतस्तु ?
यदि गोवर्धनोऽसत्यः, किमुन्निनाय तदा नन्दलालः ?
यदि कदम्बोऽसत्यः, किमारुरोह तदा मुरलीवादनाय ?
यदि यमुनाऽसत्या, भेजिम किं च तीरं तदा रासप्रतिपादनाथ ?
यदि मुरली ह्यसत्या, वादयामास किं स युवतिलोभनाय ?
यदि चीरहरणसत्यं, चकम्पिमहे किं प्रशीतलजलेषु ?
यदि रासलीलाऽसत्या, किं त्वभूम तदा क्लान्ता नर्तनेन ?
यदि दानलीलाऽसत्या, किं रुध्यामहे त्वाम्रविपिने तथैव ?
यदि झूलनमसत्य, प्रेङ्खोलयामास तरुणीजन वा कथं च ?
यदि फागलीलाऽसत्या, व्रजरथ्याः क्लिन्नाः आवीरचूर्णैं कथं च ?

यदि कृष्णो ब्रह्म अलिप्तः, आयासयामास तरुणीः रहसि वा कथं च ?

उद्धव ! वदसि त्वं किल ज्ञानस्य वृत्तम् ।
आत्मा निर्विकारस्त्वया रूप्यते तु,
न ह्यनुगम्यमानश्च स्थूलबुद्ध्या ।
प्रकाशते चिदंशः परं च स्थूलदृष्ट्या ।
प्रतीयमानस्तु भौतिकतलेषु च स्थूलबुद्ध्या ।
गूढीकरोषि तमेव तु परिभ्रामयन् ग्राम्यबालाजनं तु ।
तत्तत्त्वरूपं भासते पाने खादने हसने वदने तु तथा च,
रुदिते गमने स्थाने जागरे स्वप्ने विचरणे तथा च,
तदपि त्वमुपदिशसि यः परमार्थबुद्धिं व्यर्थमयुक्तम्
अपलपसि सुव्यक्तं परोक्षस्य वरणे सज्ञानं कुतस्तु ?

आत्मा न सीदति, न हृष्यति, कूटोऽस्ति स्थाणुवच्च,
इति जडीक्रियते त्वया मानवस्य चिदंशः कुतश्च ?
पर्यावृणोषि यथार्थं नभोधूमपटले कुतः ?
तापयसि विरहदग्धं तरुणीजनं वाग्जाले कुतः ?

सत्यं, कृष्णो हि त्वन्तर्भवो दृश्यते तस्य रूपं सदा ह्यन्तरे,
भौतिकमञ्जिमानं च द्रष्टुं नेत्राणि समयन्ति तदपि वा कथम् ?
मथुरां निवतस्व, कथयस्व छलिनं, कपटस्य निलयम्,
इतिहासो न शक्नोति क्षन्तुं विस्रम्भभङ्गं युवतीजनस्य ।"

अशृण्वं सर्वमिदम् वाग्यतः,
निषण्णीभूय सङ्धे, सजनि हे !
शून्यमनस्का चकिता, सजनि हे !!

अत्रान्तरे भ्रमर एकः समायाति तत्र,
प्रबाधते तरुणीश्च भूयोऽपि भूयः,
त्वकस्माज्जनयन् उपालम्भवर्षमपूर्वम् ।
स्मरामि, सजनि हे, वृत्तं त्वशेषम्
व्यथयच्च चेतो दीर्घं नितान्तम् ।

X　　X　　X

मधुप ! बाढं यदा त्वं भ्रश्यसि तु मत्याः;
उपहसति व्रजजनः खलु ब्रह्मोपदेशं त्वदीयम् ।
पर्यटसि पणयन् ज्ञानस्य पणसं पुर्यां च पूर्याम्;
अजानन् प्रेम्णस्तु व्यथनम्, शीलं स्वभावम् ।
महीयसे यदाऽऽगच्छसि च महनीयपुर्याः,
षट्पदोऽसि बुद्धेस्तु निलयं, द्विपदः कुतस्ते ?

नयनानि नार्हन्ति तुलयितुं कदापि, मधुप हे !
न खञ्जनकमलहरिणश्च नापि तु मत्येन बाढ़म् ।
खञ्जरीटा डयन्ते च क्षिप्रं तेषां प्रियो वर्ततेस्म;
निमीलति नलिनपत्रनेत्रच्छदस्तु रजनीमुखे स्म,
हरिणा द्रवन्ति सपदि तु यदा ते भजन्त प्रवाधम्,
मत्स्याः वियुक्ताः सहसा म्रियन्ते त्वचिरेण, विद्धि
अतिक्रामन्ति नयनानि त्वेतानि सर्वाणि, हन्त,
अनुकुर्वते स्रवणं च सततं श्यामे विविक्ते ।

मधुप हे ! शृणु एतन्नयनानां वृत्तम् ।
प्रभवामि रोदधुं सर्वमङ्गनिवहं मदीयम्
नेत्राणि किन्तु डयन्ते किल मेघकान्तेः सकाशम्
यथा कपोतः प्रभ्रमति तु वियोगे प्रियायाः,
नयने प्रभ्रमतस्त्वितस्ततः कृष्णविरहे तथैव ।
रक्षामि नेत्रे ह्यवगुण्ठने पुटकपाटं विधाय,
तदप्युपद्रवतस्तु श्यामं सपदि खलु प्रसह्य ।
कर्णौ जीवतः प्रश्रुत्य हरेः कीर्तिगाथाम्;
मनो जीवति स्म परिध्याय हरिं सर्वकालम्;
जिह्वा जीवति खलु प्रगीय हरेर्नाम बहुशः,
कण्ठो जीवति च विगाय हरेर्गुण-विलासम्;
परं प्राप्नुतो नयने किमपि नहि सेव्यं, हे मधुप!

भ्रमर हे ! यत्त्वं कृष्णेन कथितं कथय नः;
भावयामः त्वमध्यापितो नवसखीकुब्जया खलु ।
चतुरमणिकृष्णोऽस्ति सौन्दर्यसिन्धुः, मधुप हे !
यो लोभयति विश्वतरुणीजनं मधुरहसनेन चैव;

सोऽपि छल्यते कुब्जया तर्कजालं प्रसार्य्य;
गडौ सञ्चितं ज्ञानयोगं प्रदाय,
परिवर्तयति तं कुलटा तथैव ॥

मधुप हे ! बाढ़ं यदा त्वं त्यजसि स्वां बुद्धिम्,
गूहस्व योगं त्वदीयं त्वदभ्यन्तरे, प्रार्थयामः ।
भ्रमसि सर्वतो ज्ञापयन् निर्गुणब्रह्मणो गौरवञ्च,
किन्तु ग्राहकः कोऽपि नोवर्तते ब्रह्मणो निर्गुणस्य,
त्वमुपदिशसि शीर्षके जटाजूटं ग्रहीतुम्,
लेप्तुं भस्मकं सर्वगात्रे चन्दनभूषणानि विहाय।
तर्कयामो यतो व्यथयसि युवती· वियुक्ताःज्ञानोपदेशैः
ततस्ते शरीर नीलायते किल तासामभिशापपुञ्जैः,
तदपि, न विभेषि, हे मधुकर, निसर्गस्य ग्रहणात्,
विरमय ज्ञानचर्चां, निवर्तस्य मथुरां च सद्यः ॥

उद्धव ! वर्तते तव प्रकारः खलु विलोमः !
अल्पवयस्याभीरललनाना योगः !!
छिन्नकर्णा धरेत् कुण्डलम्, अञ्जयेत् अन्धिका कज्जलम्;
सीमन्तयेत् कृतमुण्डिता, कुण्ठरुग्णा लिम्पेत् केसरम्;
आमन्त्रयेत् बधिरा प्रियतमं, इति नैरर्थ्यं भजति सर्वदा,
अत, उद्धव, विरमय योगकथनं, वै लोमयतनम्,
गोपाङ्गनाभ्याः व्रजवासिनीभ्यः, मधुपसत्तम !

उद्धव ! योगेन किं प्रयोजनं गोपिकानाम्,
लालितानां सततं मधुरमुरलीवादनेन ?
अभ्यसितोऽस्माभिः प्रेमयोग एकान्ततः किल मुरारौ,
सौन्दर्यसिन्धौ च माधुर्यखानौ च कन्दर्पस्निग्धे ।
पुष्णाति स्म प्रणयं हरिर्यथा विद्यते कीलाले च मीने;
म्रियते झषो जलवियोगे, कमलं वर्तते सङ्गशून्यम्;
निर्मोकं त्यजति सर्पो न पुनरपि गृह्णाति तन्तु,
श्यामो विजह्राति तरुणीजनं खलु नवलप्रेमगृध्नुः
मधुप ! मथुरा भवति नगरी कज्जलस्य;
कृष्णो नन्दलालः, कृष्णो ह्यक्रूरः कृष्ण उद्धवोऽयम् ।

कृष्णा न जानन्ति प्रेम्णस्तु शीलं खलूत्सर्गशीलम् ।
नवमुकुलगृध्नुः त्वमपि न जानासि स्नेहस्य सर्गम्;
छिनत्सि वंशं च दन्तस्य घातैः, ह्यवमन्यसे पूर्ववासम्;
लम्पटदुर्विनीतः, खल्वानयसि प्रेमछलनस्य वृत्तम्;
अपराध्यसे खलु तरुणीषु वै क्षमणीयो न भवितासि युगे युगे च।।

कथं प्रेष्यते तेन मुद्रा मृण्मयी योगिनामलिमाध्यमेन त्विदानीम् ?
एकदा धारयति मां कुण्डलं कर्णयोः, ग्रथ्नाति स्वयमेव वेणीं मदीयम्;
लाक्षारसं लिम्पते मच्चरणयोः निजपाणिना रागीभूय लालित्यपूर्वम्,
सुखयामि स्म त्वङ्गानि पायसमृगमदहरिचन्दनानां प्रलेपैश्च पूर्वम्,
अथ कथं लिप्यते भस्मकं तेष्वङ्गेषु योगिनां रीत्या त्विदानीम् ?
मधुप, त्वमेव साक्षी, ह्यधिवससि कनकविरचितराजधानीम्;
यदा वयमधिवसामो ग्रामीयग्रामं सुदूरं नागरचाकचक्यात् ।
कथयस्व कुब्जारमणं हरिं लीलानागरं कुत्र च परित्यजेयम्,
पामरं जीवितं गर्हितं तस्य विश्लेषदुःखेऽसह्ये नितान्तम् ?

पश्य, पण्डित एष प्रपन्नः शिक्षयितुं च योगं प्रशस्यम्;
व्याख्यातुं निर्गुणं निर्विकारं च कूटस्थ - ब्रह्म;
व्रजवनिताजनाय सुरसलालताय समुपेक्ष्य लोकम् ।
अस्माकं शरण्यः कमलनयनकृष्णस्तु रासस्य रचकः;
उद्वेजयति खलु भस्मावलेपः क्लिश्नाति खलु वा योगस्य कल्पः;
हरिर्वसति युवतीनां चेतस्सु नक्तं दिवा त्वं जानीहि, भ्रमर !
खड्गौ द्वौ कथं शक्नुतो वर्तितुं खल्वेकदा एक काले, हे भ्रमर !

मधुप, योगार्णवो ह्यगम्योऽचिन्त्योऽपारोऽलङ्घ्यः;
शिवः पारयामास तर्तुमारुह्य नूनं विवेकस्य नावम् ।
वयमबला अधीराः सुकुमारप्राणाः कदर्या, न वेत्सि,
नो बलहीनेन लभ्यः चिदंशः, कथयन्ति श्रुतयः ।
ऊर्मय उत्पतन्ति योगार्णवे खलु सृजन्त्यो बिभीतिं तरुणीजनेषु;
अथच जायन्ते भ्रमरकाः विकटा ह्यगम्या तत्र तु युवतीजनैः ।
प्रतीमः प्रेमयोगं विकसितं कुसुमितं सौन्दर्यसरणौ;
कथं त्याजयसि ह्यवलम्बमेकमिदानीं विश्लेषविपदि ?

योगो भवति कूटस्वर्णं, लोभयसि तरुणीजनं कस्य हेतोः,
मधुस्वादनं शीलयति यः सोऽम्लं सेवते कस्य हेतोः ??

X X X

अथ तूष्णीं बभूवुः तरुण्यो यदाऽल्पकालम्,
युष्मासु कतमाऽस्ति राधा, पृच्छयते उद्धवेन विनम्रम् ।
वदति मधुसूदनः चर्चति प्रायशो राधायास्तु विषये,
विषीदति च मौनं, भजति संस्मृत्य तस्यास्तु वृत्तम् ।
अथोद्धवं दर्शयन्ति माञ्च वयस्याः सदयम्,
प्रोत्साहयन्ति च वक्तुं ममापि विषादं यथार्थम् ॥
न प्रबभूव वक्तुं किमपि च तूद्धवसमीपे,
कण्ठः पीड्यतेस्म भावस्य ह्यान्तरप्रबाधे ।
धाराश्रूणि पतन्ति, हिक्कामि गाढम्;
नापारयमुन्नमयितुं शिरस्कम् ।
तत उद्ध्वो मधुगिरया उवाच—
"राधे ! मा विषीद त्वित्थं प्रगाढम्,
हरिः स्मरति चर्चति त्वां च बहुशः ।
गृह्णासि नक्तंदिवा तस्य चेतः,
जागरे, स्वप्ने, मन्त्रे, विमर्शे,
गुह्ये भाषिते वा रहसि वा प्रकाशे ।
चमत्कृतः, उद्भिनक्ति च गूढम्,
राष्ट्रियविषयेषु बहुधा सच्छेदम् ।
कुब्जा चयुवती कथयति प्रणामम्,
तुभ्यं विनम्रं भगिनीं च मत्वा ।
आश्वासयति भवसि दयिता तवमेव,
हरिं परिचरति सा तु ह्युपकारनम्रा ।
विश्वसिहि, बाले, च विश्लेषदुःखम्
शमयितुं न शक्नोति कृष्णः कदापि,
अधिवससि तस्य हृदयस्य हृदयं सदैव ।

राधे ! वरीवृत्यते हरिश्च त्वदीये तु हृदये,
न क्षणमपि विविक्तः त्वया तु जानीहि, बाले !

पश्य त्वभ्यन्तरे स्वस्थविश्वासबुद्ध्या,
प्रभासिष्यते वैणविको हरिश्च सुव्यक्तम् ।"

X X X

नाशक्नुवं प्रतिवक्तुं, सजनि हे !
न प्रत्याख्यातुं च वचनं तदीयम् ।
निवृत्ता तु गेहं विषादेन भरिता,
समौनं समं किल तरुणीजनेन ॥

कदा उद्धवः प्रतिजगाम न जज्ञौ ।
युवत्यो भर्त्संयन्ति, विदग्धा तु छलिनी,
उताहो तु मूर्खा जडधीः त्वमेव !
अथवा च रक्षसि गभीरं रहस्यम्
मायिनोऽद्यापि, कथयस्व नस्तु ।

किञ्चोत्तरेयं न जाने, सजनि हे ।
किं हरिं निन्देयं, न जाने, सजनि हे !!

X X X

[ ञ ]

द्वारिकाधीशो बभूव कदा,
पट्टमहिषीः व्युवाह कदा,
सर्वमिदं त्वज्ञातं, सजनि हे !
सर्वमिदं भूरिव्यथकं, सजनि हे !!

विभावयामि च तस्यानुरागो ह्यलीकः,
निक्षिप्तमूलः पुष्पायमाने विलासे ।
अतियन्ति रुक्मिण्यादयो गोपिकाः सौकुमार्य्ये,
किमु मञ्जमनि किमु नमनीयशीले,
प्रेम्णस्तु चयने प्रकाम्ये नराणाम्,
खलु मायिनां रतिरसलोलुपानाम्,
एवं न प्रभवामि मन्तुं, सजनि हे !

वैभवे लालिताः शुद्धान्ते वसन्त्यः,
प्रेमललिते विदग्धाः छलिन्यो रमण्यः,
अस्निह्यञ्च तस्मिन् समधिकं, सजनि हे !
एवं न प्रभवामि मन्तुं, सजनि हे !!

कृष्णः संदधौ राजरक्तं शिरासु,
प्रागेव, हन्त, न जज्ञौ तदानीम्—
न कल्पितवती दूरत्वं गभीरम्,



खलु मयि व्रजनन्दने च यथार्थम्
परमार्थतो राजलक्ष्म्यै च दिष्टे ।
प्रेमा गणयति कुलगोत्रं कौलशीलम्,
प्रेमा गणयति च रूपं वयो लोकचलनम्,
प्रेमा गणयति उच्चावचं कालगमनम्,
अत्येति सर्वमिदं मे बुद्धि, सजनि हे !

X X X

कथयन्ति, प्रोत्साहयति पाण्डुपुत्रान्,
कौरवाणां विरोधं खलु वंशयुद्धे ।
सव्यसाच्यभवत् युद्धविमुखः, सजनि हे !
परं प्रवर्त्यते भीषणे सङ्गरे च, सजनि हे !
प्ररोच्यते तत्त्वाख्यानछद्मैः सजनि हे !
समाश्रित्य नूतनं तर्कव्यूहं, सजनि हे !
ततो विरचयति नारमेधमपूर्वमभूतम्,
खलु निष्कामकर्मदर्शनम् प्रस्तुवन्तु—
अत्येति सर्वमिदं मे बुद्धि, सजनि हे !

परिवर्तते वैणविक इदानीम्,
परिवर्तते दधिचौर इदानीम्,
परिवर्तते चीरहरक इदानीम्,
परिवर्तते रासरचक इदानीम्,
परिवर्तते दोलरचक इदानीम्,

परिवर्तते फागरचक इदानीम्
अत्येति सर्वमिदं मे बुद्धिम्, सजनि हे !

अपि व्रजालता वीरुधः शिक्षयन्ति;
अप्यद्रोहिसुकरासुव्रताः, शिक्षयन्ति;
अपि यमुनाया नीलापः शिक्षयन्ति;
अपि वा चिक्कणसिकताः शिक्षयन्ति;
अपि वा प्रणयातुरा बालाः शिक्षयन्ति;
अपि वा मर्दित-व्रजरेणवः शिक्षयन्ति;
एवंविधं नरमेधं, सजनि हे !
अत्येति सर्वमिदं मे बुद्धिं, सजनि हे !
कथ्यते, युद्धं समाप्तं, कुरुजास्तु गच्छन्ति नाशम्;
एवं विगलति पाण्डवजनश्चोत्तरभस्मतूले;
सोऽपि तिरोगतः त्वर्जयन् युद्धरचकस्य श्रेयः;
विध्वंसयति गृहकलहो भरतस्य भूमेस्तु शौर्यम् !

अत्येति सर्वमिदं मे बुद्धिं, सजनि हे !

दीर्यते हृदयं स्मारं च स्मारम्,
लीलामाधुर्यजालं सुरम्यम्;
अनुरागकरणं रहसि वा प्रकाशम् !
व्यथते हृदयं स्मारं च स्मारम्;
परिश्लेषं तस्य च संवाहिकायाम्;
अगणय्य रागं च व्रजगोपिकानाम्;
विस्मृत्य शीलं प्रणयीजनानाम्,
क्लिश्नाति हृदयं स्मारं च स्मारम्;
भीमरके नरमेधवृत्तम त्वपूर्वम्,
परिणमनं रक्तस्नानविधातरि,
सम्राजः मधुराणां च, सजनि हे !

कथं गर्वयेयं मुरारेस्तु प्रणये ?
कथं नो गर्वयेयं मुरारेस्तु प्रणये ?

कथं पालयामि मधुस्मृतीनां पुञ्जम् ?



कथं वारयामि संहारलीलानुस्मरणम् ?

कथं गर्वयेयं तु कृष्णस्य प्रणये ?
कथं नो गर्वयेयं तु कृष्णस्य प्रणये ?

इतिहासः स्मरिष्यति मां प्रेमिणोरूप एव,
खल्वजानन्मे पोडनं तत्पाश्चात्यचरिते,
विध्वंसलीलाविरचने वा खलु प्रणाशे
पुंस्त्वस्य भरतस्य भूम्याः चिराय ॥

गतौ द्वौ राजवंशौ सगोत्रौ विनाशम् ।
हरन्तौ तु देशस्य विभवं च शौर्यम्,
महाभारते प्रणीते च मुरलीधरेण,
खलु माधुर्यखन्या च नटनागरेण !

-कृष्णोऽवतीर्णः धर्मसंस्थापनाय,
यथा प्रोच्यते उद्धवेन पुरा तु ।
ततः कथं वर्धते धर्मविषय इदानीम्,
यदा धर्मिणोऽधर्मिण एककाले भजन्ते,
विलोपं, विनाशं च पृथिवीतलाच्च ।

तत्याज कृष्णः सुप्रमणस्तु सरणिम्,
अमास्त स्निग्धमार्गं तु सङ्गरपथेन,
अवमेने च व्रजसंस्कृतिं व्रजनिवासम्,
दधिदुग्धनवनीतजुष्टं निसर्गम्,
वैणविकस्य शीलं च हार्दम् अमन्दम्,
खलु, प्रेमिणां सौकुमार्यं सुश्लाध्यम् ।
दध्मौ युद्धशङ्खं मुरलिविनिमयेन,
शोणीचकार च भरतस्य वर्षं गभीरम् !
मलिनयाञ्चक्रे च प्रणयेतिहासं पुराणम्;
प्रच्छलयाञ्चक्रे प्रेम्णस्तु प्रेषं सुविमलम्,
शिक्षयाञ्चक्रे प्रद्वेषं च वैरमन्दम्,
खलु मरणं मारण राजलक्ष्म्याः हेतोः ।

न कल्पितवती परिणमनं तु एतत्,
माधुर्यखन्याः सौन्दर्यराज्ञः, सजनि हे !
अवसीदामि बहुशः च नित्यं, सजनि हे !
तदपि, हा—हा - करोति च हृदयं मदीयम्,
मुरारेर्वियोगे त्वतीतानुस्मरणे ।
निर्वतिष्यते मोहनो वा कदापि,
हर्षयिता मनस्तन्त्रं च प्रमीतम्,
यदा एकाकिनी लोकत्यक्ता भवामि, सजनि हे!
खलु मज्जन्ती निराशा–तमिस्रे, सजनि हे !!

रागश्छलति, वञ्चयति वंशवेणुः,
न दध्यौ तदानीं, त्वबोधा बभूव,
कथं तारयामि च नावमिदानीम्,
अनातिथ्यकालार्णवे तु अपारे "ह्यथाहे",
नाना नन्दललनं, न जाने, सजनि हे !
नाना स्नेहभोगं, न जाने, सजनि हे !!

॥ इति ॥



अपना प्रेस, फैजाबाद; फोन : ८१२०१४, ८१४७१५

# लेखकपरिचयः

काव्यस्यास्य प्रणेता डॉ० रमाशङ्करतिवारी साकेतस्नातकोत्तरमहाविद्यालयस्य स्थितस्य अयोध्यायां एवञ्च जगृहे अवकाशं तत्पदात् १९७६ ईसवीयसंवत्स शीर्षस्थो विद्वान् हिन्दी-संस्कृत-आङ्गलसाहित्यानाम् । वेशः तस्य वर्तते काव्ये काव्यशास्त्रे च । 'ए क्रिटि क्लैसिकल इण्डियन पोयटिक्स'' इत्याख्यो ग्रन्थः प्रणीतः तेन आङ्गलभाषायाम् समश्नुते ख्यातिम् आङ्गलसाहित्यमनीषिणां मण्डल्याम् । ''महाकवि कालिदास'' इत्याख्यो ग्रन्थो विरचितो हिन्दीभाषायामपि भजते प्रचुरसम्मानं, प्रचुरलोकपियता च देववाण्याः विद्वत्सु एवम् समादृत. सुप्रसिद्धदेवपुरस्कारेण मध्यप्रदेशशासनेन । ''महाकवि शूद्रक'' इत्याख्योऽपरो ग्रन्थोऽपि तेन प्रणीतः तथा उत्तरप्रदेशशासनेन पुरस्कृतो लभते ख्यातिम्। ''काव्यतत्त्वविवेकः''इत्याख्यो महत्त्वगर्भः काव्यशास्त्रीयो ग्रन्थ, विरचितः तेन देवगिरायां प्राच्यानां कारिकावृत्तिपद्धतिं समवलम्ब्य, प्रतीक्षते प्रकाशनं मानवसंसाधनविकासमन्त्रालयसाहाय्येन । एतस्य सर्वे पञ्चविंशतिपरिच्छेदाः लब्धवन्तः प्रकाशनं सम्मान्यसंस्कृतपत्रिकासु पूर्वम् । सः प्रणीतवान् विंशाधिकग्रन्थान् साकल्येन भाषात्रये येषु बहव सम्मानिताः विभिन्नपुरस्कारैस्तु ।

डॉ० तिवारीमहाभागः व्यापृतोऽस्ति साम्प्रतं कालिदासहृदयतासिद्धान्तरूपणे एवञ्च अनेकानि शोधपत्राणि तेन प्रकाशितानि विषयेऽस्मिन् विभिन्नमान्यपत्रिकासु भाषात्रये ।

वर्तमानो ग्रन्थोऽयं द्योतयति डॉ० तिवारीमहाभागस्य कारयित्रीं प्रतिभामपि । ''वैदेह्या अतीतावलोकनम्'' इत्याख्यकाव्यं प्रकाशितं पूर्वं मानवसंसाधनविकासमन्त्रालयस्य आर्थिकानुदानेन । आङ्गलसाहित्यमाध्यमेन जीविकोपार्जनं कुर्वाणोऽपि, डॉ० तिवारी वर्तते सेवमानः गीर्वाणगिरां विगतत्रिंशद्वर्षैः ।

अपना प्रेस, फैजाबाद; फोन : (0527) 812014, 814715